'ॐ श्र्यादिघृतमातृकाभ्यो नमः' इति षोडशोपचारैः पूजयेत्। अथ स्थलमातरः- तत्रैव तण्डुलपुंजेषु- 'ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा। वाराही च तथेन्द्राणी चामुण्डा सप्त मातरः।।1।। ॐ ब्राह्म्यै नमः, ब्राह्मीमावाहयामि स्थापयामि ।।1।। ॐ माहेश्वर्यै नमः, माहेश्वरीमावाहयामि स्थापयामि ।2। ॐ कौमार्यै नमः, कौमारीमावाहयामि स्थापयामि।।3।। ॐ वैष्णव्यै नमः, वैष्णवीमावाहयामि स्थापयामि।।4।। ॐ वाराह्यै नमः, वाराहीमावाहयामि स्थापयामि।।5।। ॐ इन्द्राण्यै नमः, इन्द्राणीमावाहयामि स्थापयामि।।6।। ॐ चामुण्डायै नमः, चामुण्डामावाहयामि।।7।। इत्यावाह्य। 'ॐ मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टं यज्ञठं समिमं दधातु। विश्वेदेवास इह मादयन्तामोम्प्रतिष्ठ।।' इति प्रतिष्ठाप्य 'ॐ ब्राह्म्यादिस्थल मातृकाभ्यो नमः' इति नाममन्त्रेण षोडशोपचारैः पूजयेत्।। ततः वसोर्धारापूजनं कुर्यात्। ततः कुड्ये पीठे वा आवाहित मातृणामुपरि घृतेन कुंकमाक्तेन दक्षिणोत्तराः सप्त/पंच/त्रिस्रो वा धारा दद्यात्। 'ॐ वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारं देवस्य त्व सविता पुनातु। वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः।।1।।'

<u>अथायुष्यमन्त्रजपः</u>:-

'ॐ आयुष्यं वर्चस्यठं रायस्पोषमौद्भिदम्। इदठं हिरण्यम्वर्चस्व जैत्रायाविशतादुमाम्।।1।। न तद्रक्षासो न पिशाचास्तरन्ति देवानामोजः प्रथमजठं ह्येतत्। यो बिभर्ति दाक्षायणठं हिरण्यठं स देवेषु कृणुते दीर्घमायुः स मनुष्येषु कृणुते दीर्घमायुः।। 2।। यदाबघ्नन्दाक्षायणा हिरण्यठं शतानीकाय सुमनस्यमानाः। तन्मऽआबध्ना मिशत शारदायायुष्मान् जरदष्टिर्यथासम्।।3।।'

<u>अथ सांकल्पिकनान्दीश्राद्धप्रयोगः</u> -

तत्रादौ आचम्य प्राणानायम्य देशकालौ संकीर्त्य 'अद्य चिन्तामणिमन्त्रपुरश्चरण कर्मांगत्वेन सांकल्पिकविधिना ब्राह्मणयुग्म भोजनपर्याप्तान्ननिष्क्रयीभूत यथाशक्ति हिरण्येन नान्दीश्राद्धं करिष्ये' - इति संकल्पः। ततः <u>पाद्यदानम्</u> - सत्यवसुसंज्ञकाः विश्वेदेवाः

नान्दीमुखाः ॐ भूर्भुवःस्वः इदं वः पाद्यं पादप्रक्षालनं स्वाहा संपद्यतां वृद्धिः ।।1।। अमुकगोत्रा मातृपितामहिप्रपितामह्यः नांदीमुख्यः भुर्भूवःस्वः इदं वः पाद्यं पादप्रक्षालनं स्वाहा संपद्यतां वृद्धिः।। 2।। अमुकगोत्राः पितृपितामहप्रपितामहाः नान्दीमुखा ॐ भूर्भुवःस्वः इदं वः पाद्यं पादप्रक्षालनं स्वाहा संपद्यतां वृद्धिः।।3।। मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकाः नांदीमुखाः ॐ भूर्भुवःस्वः इदं वः पाद्यं पादप्रक्षालनं स्वाहा संपद्यतां वृद्धिः।।4।। अथासनदानम् – सत्यवसुसंज्ञकानां विश्वेषां देवानां नान्दीमुखानाम् ॐ भूर्भुवःस्वः इदमासनं सुखासनं स्वाहा नमः संपद्यतां वृद्धिः नांदीश्राद्धे क्षणौ क्रियेताम्।ॐ तथा प्राप्नुतां भवन्तौ प्राप्नुवावः।।1।। अमुकगोत्राणां मातृपितामहीप्रपितामहीनां नान्दीमुखीनाम् ॐ भूर्भुवःस्वः इदमासनं सुखासनं स्वाहा नमः संपद्यतां वृद्धिः नान्दीश्राद्धे क्षणौ क्रियेताम्। ॐ तथा प्राप्नुतां भवन्तौ प्राप्नुवावः।। 2।। अमुकगोत्राणां पितृपितामह प्रपितामहानां नान्दीमुखीनाम् ॐ भूर्भुवःस्वः इदं सुखासनं स्वाहा नमः संपद्यतां वृद्धिः।।3।। द्वितीयगोत्राणां मातामहप्रमातामह वृद्धप्रमातामहानां सपत्नीकानां नान्दीमुखानाम् ॐ भूर्भुवः स्वः इदंमासनं सुखासनं स्वाहा संपद्यतां वृद्धिः नान्दीश्राद्धे क्षणौ क्रियेताम्। ॐ तथा प्राप्नुतां भवन्तौ प्राप्नुवावः।। 4।। ततो गन्धादिदानम् – सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो नान्दीमुख्येभ्यः इदं गन्धाद्यर्चनं स्वाहा संपद्यतां वृद्धिः।।1।। अमुकगोत्रेभ्यो मातृपितामहीप्रपितामहीभ्यो नान्दीमुखीभ्यः इदं गन्धाद्यर्चनं स्वाहा संपद्यतां वृद्धिः।। 2।। अमुकगोत्रेभ्यः पितृपितामहप्रपितामहेभ्यो नांदीमुखेभ्यः इदं गंधाद्यर्चनम् स्वाहा संपद्यतां वृद्धिः।। 3।। द्वितीयगोत्रेभ्यो मातामहप्रमातामहवृद्धप्रमातामहेभ्यः सपत्नीकेभ्यो नान्दीमुखेभ्य इदं गन्धाद्यर्चनं स्वाहा संपद्यतां वृद्धिः।। 4।। ततो भोजननिष्क्रयद्रव्यदानम् – सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो नान्दीमुखेभ्यो ब्राह्मणयुग्मभोजनपर्याप्तमन्नं तन्निष्क्रयीभूतं किंचद्धिरण्यं दत्तममृतरूपेण स्वाहा संपद्यतां वृद्धिः।।1।। अमुकगोत्राभ्यो मातृपितामहीप्रपितामहीभ्यो नान्दीमुखीभ्यो ब्राह्मण युग्मभोजनपर्याप्तमन्नं तन्निष्क्रयीभूतं किंचद्धिरण्यं दत्तममृतरूपेण स्वाहा संपद्यतां वृद्धिः।।2।। अमुकगोत्रेभ्यः पितृपितामह

प्रपितामहेभ्यो नान्दीमुखेभ्यो ब्राह्मणयुग्मभोजनपर्याप्तमन्नं तन्निष्क्रयीभूतं किंचद्धिरण्यं दत्तममृतरूपेण स्वाहा संपद्यतां वृद्धिः ।।3।। द्वितीयगोत्रेभ्यो मातामहप्रमातामहवृद्धप्रमातामहीभ्यः सपत्नीकेभ्यो नान्दीमुखेभ्यो ब्राह्मणयुग्मभोजनपर्याप्तमन्नं तन्निष्क्रयीभूतं किंचद्धिरण्यं दत्तममृतरूपेण स्वाहा संपद्यतां वृद्धिः ।।4।। ततः सक्षीरमुदकदानम् – सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः प्रीयन्ताम्। अमुकगोत्राः मातृपितामहीप्रपितामह्यः नान्दीमृखाः प्रीयन्ताम्। अमुकगोत्राः पितृपितामहीप्रपितामह्यः नान्दीमृखाः प्रीयन्ताम्। अमुकगोत्राः पितृपितामहप्रपितामहाः नान्दीमृखाः प्रीयन्ताम्। द्वितीयगोत्राः मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकाः नान्दीमृखाः प्रीयन्ताम्। अथाशिषो ग्रहणम्। गोत्रं नो वर्द्धताम्। (वर्द्धतां वो गोत्रम्) दातारो नोऽभिवर्धन्ताम्। (अभिवर्धन्तां वो दातारः) वेदाश्च नोऽभिवर्धन्ताम् (वर्धन्तां वो वेदाः) संततिर्नो वर्द्धताम् (वर्द्धतां वः संततिः) श्रद्धा च नो माव्यगमत् (माव्यगमद्वः श्रद्धा) बहु देयं च नोऽस्तु (अस्तु वा बह्वन्नम्) अतिथींश्च लभामहे (लभन्तां वोऽतिथयः) याचितारश्च नः सन्तु (सन्तु वो याचितारः) एता आशिषः सत्याः सन्तु (सन्त्वेताः सत्याशिषः)।। ततो दक्षिणादानम् – सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो नान्दीमुखेभ्यः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयवमूलनिष्क्रयीभूतां दक्षिणां दातुमहमुत्सृजे संपद्यतां वृद्धिः ।।1। अमुकगोत्राभ्यो मातृपितामहीप्रपितामहीभ्यो नान्दीमुखीभ्यः कृतस्य नान्दीमुखेभ्यः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयवमूलनिष्क्रयीभूतां दक्षिणां दातुमहमुत्सृजे संपद्यतां वृद्धिः ।।2।। अमुकगोत्रेभ्यः पितृपितामहप्रपितामहेभ्यो नान्दीमुखेभ्यः कृतस्य नान्दीमुखेभ्यः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयवमूलनिष्क्रयीभूतां दक्षिणां दातुमहमुत्सृजे संपद्यतां वृद्धिः ।।3।। द्वितीयगोत्रेभ्यो मातामहप्रमातामहवृद्धप्रमातामहेभ्यः सपत्नीकेभ्यो नान्दीमुखेभ्यः कृतस्य नान्दीमुखेभ्यः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयवमूलनिष्क्रयीभूतां दक्षिणां दातुमहमुत्सृजे संपद्यतां वृद्धिः ।।4।। किमनेन नान्दीश्राद्धं संपन्नं, निश्चितं सुसंपन्नमिति पठित्वा – ॐ वाजे वाजे कवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः।

**अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः।। 1।। ॐ आ मा वाजस्य प्रसवो जगम्यो मे द्यावापृथिवी विश्वरूपे। आ मा गन्तां पितरा मातरा चा मा सोमोऽमृतत्वेन गम्यात्।।2।।** इति मन्त्रद्वयेन विसर्जयेत्।। **ॐ विश्वेदेवाः प्रीयन्ताम् न मम। मया आचरितेऽस्मिन्नान्दीश्राद्धे न्यूनातिरिक्तो यो विधिः स उपविष्टब्राह्मणानां वचनात् नान्दीमुखप्रसादात्सर्वः परिपूर्णाऽस्तु।। (अस्तु परिपूर्णः)।।**

<u>**द्वारपूजादिः-**</u>

तद्यथा – ताम्राद्यर्घ्यपात्रं गृहीत्वा '**ॐ ह्रीः द्वारार्घ्यं साधयामी**' त्युक्त्वा। '**ॐ फट्**' इति पात्रं प्रक्षाल्य। '**ॐ नमः**' इति जलेनापूर्य। '**ॐ गंगे च यमुने चैव गौदवरि सरस्वति। नर्मदे सिन्धुकावेरि जलेऽस्मिन्सन्निधिं कुरु ।।1।।**' इति तीर्थान्यावाह्य। '**ॐ**' इत्यनेन गन्धपुष्पे निक्षिप्य धेनुमुद्रां प्रदर्श्य। मूलमन्त्रेणाभिमन्त्रेयत्। एवं सामान्यार्घ्यं संपाद्य। '**ॐ अस्त्राय फट्**' इत्यभिमन्त्रितजलेन द्वारं संप्रोक्ष्य। ऊर्ध्वशाखायाम् – **ॐ गं गणपतये नमः**। तद्दक्षिणे भागे – **ॐ महालक्ष्म्यै नमः**। वामभागे – **ॐ सरस्वत्यै नमः**। दक्षिणशाखायाम्– **ॐ विघ्नेशाय नमः**। तद्दक्षिणे भागे – **ॐ गंगायै नमः**। वामभागे– **ॐ यमुनायै नमः**। वामशाखायाम्– **ॐ क्षेत्रपालाय नमः**। तद्दक्षिणे भागे – **ॐ सिन्धवे नमः**। वामभागे – **ॐ यमुनायै नमः**। पुनर्दक्षिणशाखायाम् – **ॐ धात्रे नमः**।।1।। वामशाखायाम्– **ॐ विधात्रे नमः**।।2।। पुनर्दक्षिणशाखायाम्– **ॐ शंखनिधये नमः** ।।1।। वामशाखायाम् – **ॐ अस्त्राय नमः** ।।1।। इति गन्धादिभिरभ्यर्च्य तत्तद्देवताद्वारपालान् पूजयेत्। अथ विष्णुद्वारपालान् पूजयेत् –**ॐ नन्दाय नमः**।।1।। **ॐ सुनन्दाय नमः** ।।2।। **ॐ चण्डाय नमः** ।।3।। **ॐ प्रचण्डाय नमः** ।।4।। **ॐ बलाय नमः** ।।5।। **ॐ प्रबलाय नमः** ।।6।। **ॐ भद्राय नमः** ।।7।। **ॐ सुभद्राय नमः** ।।8।। शिवद्वारपालान् पूजयेत्– **ॐ नन्दिने नमः** ।।1।। **ॐ महाकालाय नमः** ।।2।। **ॐ गणेशाय नमः** ।।3।। **ॐ वृषभाय नमः**।।4।। **ॐ भृंगिणे नमः** ।।5।। **ॐ रिटये नमः** ।।6।। **ॐ स्कन्दाय नमः** ।।7।। **ॐ चण्डेश्वराय नमः** ।।8।। गणेशद्वारपालान् पूजयेत्–

**ॐ वक्रतुण्डाय नमः** ।। **ॐ एकदंष्ट्राय नमः** ।।2।। **ॐ महोदराय नमः** ।।3।। **ॐ गजाननाय नमः** ।।4।। **ॐ लम्बोदराय नमः**।।5।। **ॐ विकटाय नमः** ।।6।। **ॐ विघ्नराजाय नमः** ।।7।। **ॐ धूम्रवर्णाय नमः** ।।8।। शक्तिद्वारपालान् पूजयेत् - **ॐ ब्राह्म्यै नमः** ।।1।। **ॐ माहेश्वर्यै नमः** ।।2।। **ॐ कौमार्यै नमः** ।।3।। **ॐ वैष्णव्यै नमः** ।।4।। **ॐ वाराह्यै नमः** ।।5।। **ॐ इन्द्रायै नमः** ।।6।। **ॐ चामुण्डायै नमः** ।।7।। **ॐ महालक्ष्म्यै नमः** ।।8।। ततः पूर्वादिदिग्देवताः क्रमेण पूजयेतः- पूर्वस्यां - **ॐ इन्द्राय नमः** ।।1।। आग्नेय्याम् - **ॐ अग्नये नमः** ।।2।। याम्याम् - **ॐ यमाय नमः** ।।3।। नैर्ऋत्याम् - **ॐ निर्ऋतये नमः** ।।4।। प्रतीच्याम् - **ॐ वरुणाय नमः** ।।5।। वायव्याम् - **ॐ वायवे नमः** ।।6।। उत्तरस्याम् - **ॐ कुबेराय नमः** ।।7।। ईशान्याम् - **ॐ ईशानाय नमः** ।।8।। एवं द्वारपूजां विधाय। आत्मानं शंकरं ध्यात्वा "**ॐ शिवाज्ञया इतोऽन्यत्र व्रजन्तु सर्व एव हि।**" इति मन्त्रं मूलमन्त्रं च पठन् दिव्यदृष्ट्यवलोकनेन दिव्यान्विघ्नान्निवार्य '**ॐ फट्**' इति मन्त्रेणाऽर्घ्यपानीयैः प्रोक्षणेनान्तरिक्षस्थानुत्सार्य तेनैव मन्त्रेण भूमौ वामपादपार्ष्णिघातेन धरागतान्विघ्नानुत्सारयेत्।। ततः '**ॐ अपसर्पन्तु ते भूता ये भूता भूमि संस्थिताः। ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया**।।1।। **अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम्। सर्वेषामविरोधेन ब्रह्मकर्म समारभे**।।2।।' मन्त्रद्वयेन सर्वान् विघ्नान् निवार्य्य नवयोगिनीं स्थापयेत्। (9 दीपकेष्वेव 9 योगिनीनां स्थापनं कृत्वा पंचोपचारैः सर्वत्र पूजा कार्या) तद्यथा- चित्रे पृ. 226 दर्शित 1, 2, आदि क्रमेण आवाहनादिपूर्वकं स्थाप्य पूजनीयं। '**ॐ आं प्रभायै नमः, प्रभामावाहयामि स्थापयामि पूजयामि। ॐ ईं मायायै नमः, मायामावाहयामि स्थापयामि पूजयामि। ॐ ऊं जयायै नमः, जयामावाहयामि स्थापयामि पूजयामि। ॐ एं सूक्ष्मायै नमः, सूक्ष्मामावाहयामि स्थापयामि पूजयामि। ॐ ऐं विशुद्धायै नमः, विशुद्धामावाहयामि स्थापयामि पूजयामि। ॐ ओं नन्दिन्यै नमः, नन्दिनीमावाहयामि स्थापयामि पूजयामि। ॐ औं सुप्रभायै नमः, सुप्रभामावाहयामि स्थापयामि पूजयामि। ॐ अं विजयायै नमः, विजयामावाहयामि स्थापयामि पूजयामि। ॐ अः सर्वसिद्धिदायै नमः, सर्वसिद्धिदामावाहयामि स्थापयामि पूजयामि।**' ततः सिंह स्थापना - '**ॐ नमो भगवते वज्रनखदंष्ट्रायुधाय महासिंहाय हुं फट् नमः, सिंहमावाहयामि स्थापयामि। पूजयामि।**' एवमेव ब्रह्माविष्णुशिवाः स्थाप्याः ततः चिन्तामणियन्त्रम् (पृ.सं. 226) स्थापयेत्। तदनन्तरम्-

**नवशक्ति पूजनम्-**

**'ॐ जयायै नमः। ॐ विजयायै नमः। ॐ अजितायै नमः। ॐ अपराजितायै नमः। ॐ नित्यायै नमः। ॐ विलासिन्यै नमः। ॐ दोग्ध्र्यै नमः। ॐ अघोरायै नमः। ॐ मङ्गलायै नमः।'**

**पीठपूजनम्**

पीठस्याधोभागे-**ॐ आधारशक्त्यै नमः। ॐ कूर्माय नमः। ॐ अनन्ताय नमः। ॐ वराहाय नमः। ॐ पृथिव्यै नमः। ॐ विचित्रदिव्यमण्डपाय नमः।** मण्डपपरितः-**ॐ कल्पवृक्षेभ्यो नमः। ॐ सुवर्णवेदिकायै नमः। ॐ रत्नसिंहासनाय नमः।** सिंहासनपादेषु आग्नेयकोणे-**ॐ धर्माय नमः।** नैर्ऋत्यकोणे-**ॐ ज्ञानाय नमः।** वायव्यकोणे **ॐ वैराग्याय नमः।** ईशानकोणे-**ॐ ऐश्वर्याय नमः।** सिंहासनोपरि- **ॐ तत्प्राकारायानन्ताय नमः। ॐ पद्माय नमः। ॐ आनन्दकन्दाय नमः। ॐ संविन्नालाय नमः। ॐ प्रकृतिमयपत्रेभ्यो नमः। ॐ विकारमयकेशरेभ्यो नमः। ॐ पञ्चाशद्वर्णाकर्णिकायै नमः।** पद्मदलकेशरकर्णिकासु-**ॐ सं सत्त्वाय नमः।** कर्णिकासु-**ॐ मं तमसे नमः। ॐ अं द्वादशकलात्मनेऽर्कमण्डलाय नमः। ॐ उं षोडशकलात्मने सोमण्डलाय नमः। ॐ मं दशकलात्मने अग्निमण्डलाय नमः। ॐ अं ब्रह्मणे नमः। ॐ विं विष्णवे नमः। ॐ मं महेश्वराय नमः। ॐ आं आत्मने नमः। ॐ अं अन्तरात्मने नमः। ॐ पं परमात्मने नमः। ॐ जं ज्ञानात्मने नमः।** सर्वपद्मार्चनम् अथ पूर्वादिक्रमेण-**ॐ वामायै नमः। ॐ ज्येष्ठायै नमः। ॐ रौद्र्यै नमः। ॐ काल्यै नमः। ॐ कलविकरण्यै नमः। ॐ बलविकरण्यै नमः। ॐ बलप्रमथिन्यै नमः। ॐ सर्वभूतदमन्यै नमः। ॐ मनोन्मनिन्यै नमः।** अथ कर्णिकायाम्। **ॐ नमो भगवते सकलगुणात्मशक्तियुक्तायानन्ताय योगपीठात्मने नमः।** इति कर्णिकायां, ततः पुष्पाञ्जलिना पीठं संपूज्य- **'सत्यज्ञानानन्तानन्दरूपं परं धामैव सकलं पीठम्'** इति चिन्तयेत्। आचार्य **'ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञꣳ समिमं दधातु। विश्वेदेवास इह मादयन्तमो३ँ प्रतिष्ठ।।'** इस मन्त्र का उच्चारण करें तथा यजमान से **'पीठदेवता सुप्रतिष्ठिता वरदा भवन्तु। आवाहितपीठदेवताभ्यो नमः।'** इसका उच्चारण करावें।

## अग्न्युत्तारणम्

यजमान से निम्न संकल्प अग्न्युत्तारण के लिए आचार्य करावें-

**'देशकालौ संकीर्त्य, करिष्यमाण श्रीभुवनेश्वरीपूजनकर्मणि न्यूनातिरिक्तदोषपरिहारार्थं अथवा अवघातादिदोषपरिहार्थं** अमुक **गोत्रः** अमुकशर्माऽहं (वर्माऽहं, गुप्तोऽहे) **अस्याः सुवर्णमयश्रीभुवनेश्वरीप्रतिमायाः संशुद्ध्यर्थमग्न्युत्तारणं करिष्ये।'**

किसी पात्र में स्वर्ण की श्रीभुवनेश्वरी की प्रतिमा का पंचामृत लेपन कर पान के ऊपर रखकर इन बारह वैदिक मन्त्रों का उच्चारण आचार्य सहित सभी ब्राह्मण करके यजमान से दुग्धयुक्त जलधारा प्रदान करावें-

**'ॐ समुद्रस्य त्वावकयाग्ने परिव्ययामसि। पावको अस्म्भ्यर्ठ० शिवो भव।।1।। ॐ हिमस्य त्वा जरायुणाग्ने परिव्ययामसि। पावको अस्मभ्यर्ठ० शिवो भव।।२।। ॐ उप ज्मन्नुप वेतसेऽवतर नदीष्वा। अग्ने पित्तमपामसि मण्डूकि ताभिरागहि। सेमं नो यज्ञं पावकवर्णठ० शिवं कृधि।।३।। ॐ अपामिदं न्ययनर्ठ० समुद्रस्य निवेशनम्। अन्याँस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यर्ठ० शिवो भव।।४।। ॐ अग्ने पावके रोचिषा मन्द्रया देव जिह्वया। आ देवान्वक्षि यक्षि च। ।।5।। ॐ स नः पावक दीदिवोऽग्ने देवाँ२।। इहावह यज्ञर्ठ० हविश्च नः ।।६।। ॐ पावकया यश्चितयन्त्य कृपा क्षामनुच उषासो न भागुना। तूर्वन्न यामन्नेतशस्य नू रण आ यो घृणेन ततृषाणो अजरः।।७।। ॐ नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे। अन्नांस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यर्ठ० शिवो भव।।८।। ॐ नृषदे वेडप्सुषदे वेड् बर्हिषदे वेड् वनसदे स्वर्विदे वेट्।।९।। ॐ ये देवा देवानां यज्ञिया यज्ञियानार्ठ० संवत्सरीणामुप भागमासते। अहुतादो हविषो यज्ञे अस्मिन्त्स्वयं पिबन्तु मधुनो घृतस्य ।। १०।। ये देवा देवेष्वधि देवत्वमायन्ये ब्रह्मणः पुर एतारो अस्य। येभ्यो न ऋते पवते धाम किञ्चन ते दिवो न पृथिव्या अधि स्नुषु।।११।। ॐ प्राणदा अपानदा व्यानदा वर्चोदा वरिवोदाः। अन्यांस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यर्ठ० शिवो भव।।१२।।'**

तद्यथा-स्वर्णमयीप्रधानप्रतिमां हस्तेन संस्पृश्य, बीजमन्त्रान् जपेत्। **'ॐ आँ ह्रीं क्रों यं रं लं वं शं षं सं हं सः अस्यां मूर्तौ प्राणाः इह**

प्राणाः। ॐ ह्रीं क्रों यं रं लं वं शं षं सं हं सः अस्यां मूर्तौ जीव इह स्थितः। (पुनः) ओं ह्रीं क्रों यं रं लं वं शं षं सं हं सः अस्यां मूर्तौ सर्वेन्द्रियाणि वाङ्मनस्त्वक्चक्षुः-श्रोत्र जिह्वा-घ्राण-पाणि-पाद-पायूपस्थानि इहैवागत्य सुखं चिरं तिष्ठन्तु स्वाहा।'

**प्राणप्रतिष्ठाप्रारम्भः**

माता भुवनेश्वरी देवी की मूर्ति के सिर या हृदय का स्पर्श कर प्राणप्रतिष्ठा करें।

विनियोगः- **अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्म-विष्णु-रुद्रा ऋषयः, ऋग्यजुःसामानि छन्दांसि, क्रियामयवपुः प्राणाख्या देवता, आं बीजं, ह्रीं शक्तिः, क्रौं कीलकं श्रीभवुनेश्वरीदेव्याः प्राणप्रतिष्ठापने विनियोगः।**

तदनन्तर ऋष्यादियों का क्रम से शिर, मुख, हृदय, नाभि, गुह्य और पैरों में न्यास करें।

**ॐ ब्रह्मविष्णुरुद्रऋषिभ्यो नमः**-शिरसि। **ऋग्यजुःसामछन्दोभ्यो नमः**- मुखे। **ॐ प्राणाख्यदेवतायै नमः**-हृदि। **ॐ आं बीजाय नमः**- गुह्ये (लिङ्गगे)। **ॐ ह्रीं शक्तये नमः**-पादयोः। **ॐ क्रौं कीलकाय नमः** - सर्वाङ्गेषु।

करन्यासः-**ॐ अं कं खं गं घं ङं आं पृथिव्यप्तेजोवाय्वाकाशात्मने आं अङ्गुष्ठाभ्यां नमः। ॐ इं चं छं जं झं ञं शब्दस्पर्शरूपरसगन्धात्मने ईं तर्जनीभ्यां नमः। ॐ उं टं ठं डं ढं णं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने ॐ मध्यमाभ्यां नमः। ॐ एं तं थं दं धं नं वाक्-पाणि-पाद-पायूपस्थात्मने ऐं अनामिकाभ्यां नमः। ॐ ओं पं फं बं मं वचनादानविहरणोत्सर्गनन्दात्मने औं कनिष्ठकाभ्यां नमः। ॐ अं यं रं लं वं शं षं सं हं ळं क्षं मनोबुद्ध्यहंकारचित्तात्मने अः करतलकरपृष्ठाभ्यां नमः।**

हृदयादिन्यासः- **ॐ अं कं खं गं घं डं पृथिव्यप्तेजोवाय्वाकाशात्मने आं हृदयाय नमः। ॐ इं चं छं जं झं ञं शब्दस्पर्शरूपरसगन्धात्मने ईं शिरसे स्वाहा। ॐ उं टं ठं डं ढं णं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने ऊं शिखायै वषट्। ॐ एं तं थं दं धं नं वाक्पाणिपादपायूपस्थात्मने ऐं कवचाय हुम्। ॐ ओं पं फं बं भं भं मं वचनादानविहरणोत्सर्गानन्दात्मने औं नेत्रत्राय वौषट्। ॐ अं यं रं लं वं शं षं सं हं ळं क्षं मनोबुद्ध्यहङ्कारचित्तात्मने अः अस्त्राय फट्।** एवमात्मनि मूर्तौ (देवे) च न्यासं कुर्यात्।

इस प्रकार आत्मा और देवता में उपरोक्त न्यासों को करके भुवनेश्वरी की मूर्ति का स्पर्श कर जप करें, पुनः भुवनेश्वरी की मूर्ति का हाथ से स्पर्श कर निम्न प्राणप्रतिष्ठा मंत्रों का उच्चारण करें।

**'ॐ आँ ह्रीं क्रों यँ रँ लँ वँ शँ षँ सँ हँ क्षँ हँ सः सोऽहं अस्याः श्रीभुवनेश्वरीप्रतिमायाः प्राणाः इह प्राणाः। ॐ ह्रीं क्रों यँ रँ लँ वँ शँ षँ सँ हँ क्षँ हँ सः सोऽहं अस्याः श्रीभुवनेश्वरीप्रतिमायाः जीव इह स्थितः। ॐ आँ ह्रीं क्रों यँ रँ लँ वँ शँ षँ सँ हँ क्षँ हँ सः सोऽहं अस्याः श्रीभुवनेश्वरीप्रतिमायाः वाङ्-मनस्त्वक्-चक्षुः-श्रोत्र-जिह्वा-घ्राण-पाणि-पायूपस्थानि इहैवागत्य सुखं चिरं तिष्ठन्तु स्वाहा।'**

**प्राणप्रतिष्ठावैदिकमन्त्राः**

आचार्य निम्न मन्त्रों का उच्चारण करते हुए प्रतिमा/यन्त्र की प्राणप्रतिष्ठा करावें-

**'ॐ मनो मे तर्पयत वाचं मे तर्पयत प्राणं मे तर्पयत चक्षुर्मे तर्पयत श्रोत्रं मे तर्पयतात्मानं मे तर्पयत प्रजां मे तर्पयत पशून्मे तर्पयत गणान्मे तर्पयत गणा मे मा वितृषन्।।१।। ॐ ऐन्द्रः प्राणो अङ्गे अङ्गे निदीध्यदैन्द्र अङ्गे अङ्गे निधीतः। देव त्वष्टर्भूरि ते सᳬसमेतु सलक्ष्मा यद्विपुरुषं भवाति। देवत्रा यन्तमवसे सखायोऽनु त्वा माता पितरो मदन्तु।।२।। ॐ वाचं ते शुन्धामि प्राणं ते शुन्धामि चक्षुस्ते शुन्धामि श्रोत्रं ते शुन्धामि नाभिं ते शुन्धामि मेढ्रं ते शुन्धामि पायुं ते शुन्धामि चरित्रांस्ते शुन्धामि।।३।। ॐ अनस्त आप्यायतां वाक्त आप्यायतां प्राणस्त आप्यायतां चक्षुस्तु आप्यायताᳬश्रोत्रं त आप्यायताम्। यत्ते क्रूरं यदास्थितं तत्त आप्यायतां निष्ट्याप्यायतां तत्ते शुध्यतु शमहोभ्यः। ओषधे त्रायस्व स्वधिते मैनᳬ हिᳬसीः।।४।। ॐ अपां पेरुरस्यापो देवी। स्वदन्तु स्वात्तं चित्सद्देवहविः सं ते प्राणो वातेन गच्छताᳬ समङ्गानि यजत्रैः सं यज्ञपतिराशिषा।।५।। ॐ सं ते मनो मनसा सं प्राणाः प्राणेन गच्छताम्। रेडस्यग्निष्ट्वा श्रीणा त्वापस्त्वा समरिणन्वातस्य त्वा ध्राज्यै पूष्णो रᳬह्या ऊष्मणो**

व्यथिषत्प्रयुतं द्वेषः ।।६।। ॐ प्राणपा मे अपानपाश्चक्षुष्पाः श्रोत्रपाश्च मे। वाचो मे विश्वभेषजो मनसोऽसि विलायकः।।७।। ॐ प्राणश्च मेऽपानश्च मे व्यानश्च मे चित्तं च म आधीतं च मे वाक् च मे मनश्च मे चक्षुश्च में श्रोत्रं च मे दक्षश्च में बलं च मे यज्ञेन कल्पन्ताम्।।८।। प्राणं मे पाह्यपानं मे पाहि व्यानं मे पाहि चक्षुर्म उर्व्या विभाहि श्रोत्रं मे श्लोकय। अपः पिन्वौषधीर्जिन्व द्विपादव चतुष्पात्पाहि दिवो वृष्टिमेरय।।९।। ॐ प्राणाय मे वर्चोदा वर्चसे पवस्व व्यानाय मे वर्चोदा वर्चसे पवस्वोदानय मे वर्चोदा वर्चसे पवस्व वाचे मे वर्चोदा वर्चसे पवस्व क्रतुदक्षाभ्यां मे वर्चोदा वर्चसे पवस्व श्रोत्राय मे वर्चोदा वर्चसे पवस्व चक्षुर्भ्यां मे वर्चोदाऽसौ वर्चसे पवेथाम्।।१०।। ॐ प्राणाय स्वाहाऽपानाय स्वाहा व्यानाय स्वाहा चक्षुषे स्वाहा श्रोत्राय स्वाहा वाचे स्वाहा मनसे स्वाहा।।११।। ॐ अयं पुरो भुवस्तस्य प्राणो भौवायनो वसन्तः प्राणायनो गायत्री वासन्ती गायत्र्यै गायत्रम् गायत्रादुपाᳬशुरुपाᳬशोस्त्रिवृत्त्रिवृतो रथन्तरं वसिष्ठ ऋषिः प्रजापतिगृहीतया त्वया प्राणं गृह्णामि प्रजाभ्यः ।।१२।। ॐ अयं पश्चाद्विश्वयशस्तस्य चक्षुर्वैश्वयशसं वर्षाश्चाक्षुष्यो जगती वार्षी ऋक्सममृक्समाच्छुक्रः शुक्रात्सप्तदशः सप्तदशाद्वैरूपं जमदग्निर्ऋषिः प्रजापतिगृहीतया त्वया चक्षुर्गृह्णामि प्रजाभ्यः।।१३।। ॐ इदमुत्तरात्स्वस्तस्य श्रोत्रᳬ सौवᳬ शरच्छ्रौत्र्यनुष्टुप्शारद्यनुष्टुभ ऐडमैडान्मन्थी मन्थिन एकविᳬशं एकविᳬशाद्वैराजं विश्वामित्रं ऋषिः प्रजापतिगृहीतया त्वया श्रोत्रं गृह्णामि प्रजाभ्यः।।१४।। ॐ इयमुपरि मतिस्तस्यै वाङ्मत्या हेमन्तो वाच्यः पङ्क्तिर्हैमन्ती पङ्क्त्यै निधनवन्निधनवत आग्रयणऽआग्रयणा त्रिणवस्त्रयस्त्रिᳬशौ त्रिणवस्त्रयस्त्रिᳬ शाभ्याᳬशाक्वररैवते विश्वकर्म ऋषिः प्रजापतिगृहीतया त्वया वाचं गृह्णामि प्रजाभ्यो लोकं ता इन्द्रम्।।१५।। ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञᳬ समिमं दधातु। विश्वेदेवास इह मादयन्तामो३ँ प्रतिष्ठ।।

अस्यै प्राणाः प्रतिष्ठन्तु अस्यै प्राणाः क्षरन्तु च। अस्यै देवत्वमर्चायै स्वाहेति यजुरीरयेत्।।'

## नेत्रोन्मीलनम्

आचार्य निम्न मन्त्र का उच्चारण करते हुए माता भुवनेश्वरी का नेत्रोन्मीलनकर्म यजमान से करवायें-

**'ॐ वृत्रस्यासि कनीनकश्चक्षुर्द्दाऽअसि चक्षुर्म्मे देहि।'**

इसके पश्चात् प्रधान कलश के ऊपर स्थित सिंहासन पर भुवनेश्वरी की प्रतिमा स्थापित कर उसका षोडशोपचार से पूजन करें।

## अथ मण्डपप्रवेशः

अवकाशप्रदानाय शनैः स्वांगं संकोचयन्वामशाखां स्पृशन् दक्षिणपादेन प्रविशेत्। एवं पूजामण्डपं प्रविश्य स्वेष्टदेवं संस्मृत्य घण्टानादं कृत्वा वाससा द्वारमाच्छाद्य पंचगव्यार्घतोयाभ्याम्- **'ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा। यः स्मरेत्पुण्डरीकाक्षं स बाह्यभ्यन्तरः शुचिः।।'** इति मन्त्रेण मण्डपान्तरं प्रोक्ष्य। ईशान्याम्-**'ॐ ब्रह्मणे नमः। ॐ वास्तुपुरुषाय नमः। ॐ क्षेत्रपालाय नमः।।'** इति ब्रह्मवास्तुपुरुषक्षेत्रपालान् संपूज्य **'ॐ तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम। भैरवाय नमस्तुभ्यमनुज्ञां देहि मे प्रभो।।'** इति भैरवं प्रार्थयेत्।। अथासनादिविधानम्- तत्र तावत् आसनभूमौ कूर्मशोधनं कार्यम्। तद्यथा- जपस्थानभूमिं कृत्वा पूर्वादिसप्तकोष्ठेषु क्रमेण कवर्ग-1, चवर्ग-2, टवर्ग-3, तवर्ग-4, पवर्ग-5, यवर्ग-6, शवर्गान्-7 लिखित्वा ईशान्यामष्टमे कोष्ठे 'ल' 'क्ष' इति द्वौ वर्णौ विलिख्य मध्यकोष्ठमपि नवधा विभज्य तत्र पूर्वादिषु अष्टदिक्षु अकारादिस्वरद्वयं क्रमेण लिखेत्। (चित्र देखें पृष्ठ संख्या 440 ) यत्र कोष्ठे क्षेत्रस्य वा ग्रामस्य साधकस्य वा नामादि वर्णो भवेत् तदेव कूर्ममुखं जपसिद्धिं भवति। तत्रैव दीपस्थापनम् कुर्यात्। यत्र जपकर्ता एक एव तदा कूर्ममुखे उपविश्य तत्रैव दीपस्थापनं कृत्वा जपं कुर्यात्। यत्र ब्राह्मणा जापकास्तत्र कूर्ममुखोपरि दीपमेव स्थापयेत् स्थानाभावश्चेत्। एवं कूर्मशोधनं दीपस्थापनशोधने च विधाय आसनाद्यर्थं जलादिना त्रिकोणं कृत्वा तत्र **'ॐ कूर्माय नमः, ॐ ह्रीं आधारशक्तिकमलासनाय नमः, ॐ पृथिव्यै नमः।'** इति गन्धाक्षतपुष्पैः संपूज्य तदुपर्यनुद्विघ्नकरं कुशासनम्, तदुपरि मृगजिनम्, तदुपरि कम्बलाद्यासनम् चास्तीर्य स्थापितानां त्रयाणामासनानामुपरि क्रमेण **'ॐ अनन्तासनाय नमः। ॐ विमलासनाय नमः। ॐ**

**पद्मासनाय नमः।**' इति मन्त्रत्रयेण त्रीन् दर्भान् प्रत्येकं निदध्यात् (काष्ठदिनिषिद्धासनानि वर्जयेत्) एवमासनं संस्थाप्य तत्र प्राङ्मुख उदङ्मुखो वा उपविश्य स्वस्तिकासनपद्मासन- वीरासनेष्वन्यतममासनं कुर्यात्।। तत्रासनमन्त्रं- '**पृथ्वीति मन्त्रस्य मेरुपृष्ठऋषिः, सुतलं छन्दः, कूर्मो देवता, आसने विनियोगः। ॐ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता। त्वं च धारय मां देवि पवित्रं कुरु चासनम्।।1।।**' ततो मूलमन्त्रेण शिखां बद्ध्वा आचम्य ततः पाद्यार्घ्याचमनीयमधुपर्कस्नानार्थं पंचपात्राणि पुष्पादींश्च दक्षिणपार्श्वे संस्थाप्य जलपात्रं व्यजनं छत्रादर्शचामराणि च वामे स्थापयेत्। ततः करद्वये अनामिकामूलयोः कुशपवित्रद्वयं स्वर्णपवित्रद्वयं वा परिधाय स्मार्तविधिना त्रिराचम्य। प्राणानायम्य देशकालौ संकीर्त्य '**ममात्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थ**ममुक**कामनासिद्ध्यर्थम् भुवनेश्वरीदेवताप्रीतये चिन्तामणिमन्त्रपुरश्चरणान्तर्गतचिन्तामणिमंत्र जपं करिष्ये तदंगत्वेन भूतशुद्धिप्राणप्रतिष्ठाऽन्तर्मातृकाबहिर्मातृकान्यासांश्च करिष्ये**' इति संकल्प। ऋत्विग्भिस्तु देशकालसंकीर्तनान्ते '**यजमानेन वृतोऽहंकरिष्यामि**' इति प्रत्येकं संकल्पः। ततः कृतांजलिपुटः भूतशुद्ध्यादिकर्म कुर्यात्। तद्यथा- '**ॐ सूर्यः सोमो यमः कालः संध्या भूतानि पंच च। एते शुभाऽशुभस्येह कर्मणो मम साक्षिणः।।1।। भो देव प्राकृतं चित्तं पापाक्रान्तमभून्मम।। तन्निस्सारय चित्तान्मे पापं तेऽस्तु नमो नमः।।2।।**' इति प्रार्थ्य वामभागे '**ॐ गुरुभ्यो नमः।**' दक्षिणे '**ॐ गणेशाय नमः।**' इति नत्वा करयोः '**ॐ अस्त्राय फट्**' इत्यस्त्रं न्यस्य तदुपरि तालत्रयं कृत्वा अंगुष्ठतर्जनीभ्यां शब्दं कुर्वन् '**ॐ नमः सुदर्शनाय अस्त्रराजाय फट्**' इति मन्त्रेण दिग्बन्धनं कृत्वा वह्निप्रकारत्रयं विभाव्य मूलेनाचम्य प्राणानायम्य भूतशुद्धिं कुर्यात्।

अथ **<u>भूतशुद्धिप्रकार</u>**ः- कुम्भकप्राणायामेन मूलाधारात् ब्रह्मरंध्रगतां स्मृत्वा हृदयस्थं जीवं प्रदीपकलिकाकारं गृहीत्वा सुषुम्नामार्गेण ब्रह्मरंध्रं गत्वा '**ॐ हंसः सोऽहमिति**' मन्त्रेण जीवं ब्रह्मणि संयोजयेत्। ततः पादादिजानुपर्यन्तं चतुष्कोणं वज्रलांछितं स्वर्णवर्णं पृथ्वीमण्डलम् '**लँ**' इति भूबीजाढ्यं स्मरेत्।।1।। जान्वादि नाभिपर्यन्तमर्द्धचन्द्राकारं पद्मद्वयांकितं श्वेतवर्णमपां स्थानं सोममण्डलम् '**वं**' इति वरुणबीजाढ्यं स्मरेत्।।2।। नाभ्यादि हृदयपर्यन्तं त्रिकोणं स्वस्तिकांकितं रक्तवर्णमग्निमण्डलं '**रं**' इति वह्निबीजाढ्यं स्मरेत्।।3।। हृदयादिभ्रूमध्यपर्यन्तं वृत्तं षड् बिन्दुलांछितं धूम्राभं वायुमण्डलम् '**यं**' वायुबीजाढ्यं स्मरेत्।।4।। भ्रूमध्यादारभ्य ब्रह्मरन्ध्रान्तं वृत्तं स्वच्छं मनोहरमाकाशमण्डलं '**हं**' व्योमबीजाढ्यं स्मरेत्।।5।।

**मातृकान्यासादिः-**

तत्र तावदन्तर्मातृकान्यासः- **ॐ अस्य श्रयन्तर्मातृकान्यासमन्त्रस्य प्रजापति ऋषिः, गायत्री छन्दः, सरस्वती देवता, हलो बीजानि, स्वराः शक्तयः, क्षं कीलकम्, अखिलफलाप्तये न्यासे विनियोगः।** अथ ऋष्यादिन्यासः- **ॐ अं प्रजापतिऋषये नमः आं** - शिरसि। **ॐ इं गायत्रीछन्दसे नमः ईं** - मुखे। **ॐ उं सरस्वतीदेवतायै नमः ऊं** - हृदये। **ॐ एं हल्भ्यो बीजेभ्यो नमः ऐं** - गुह्ये। **ॐ ओं स्वरशक्तिभ्यो नमः औं** - पादयोः। **ॐ अं क्षं अः कीलकाय नमः** - नाभौ। **ॐ अखिलफलाप्तये न्यासे विनियोगाय नमः-** सर्वांगेषु। अथ करन्यासः- **ॐ अं कँ खँ गँ घँ ङँ आं अगुंष्ठाभ्यां नमः। ॐ इं चँ छँ जँ झँ ञँ ईं तर्जनीभ्यां नमः। ॐ उं टँ ठँ डँ ढँ णँ ऊं मध्यमाभ्यां नमः। ॐ एं तँ थँ दँ धँ नँ ऐं अनामिकाभ्यां नमः। ॐ ओं पँ फँ बँ भँ मँ औं कनिष्ठाकाभ्यां नमः। ॐ अं यँ रँ लँ वँ शँ षँ सँ हँ क्षँ अः करतलकरपृष्ठाभ्यां नमः।** अथ हृदयादिषडंगन्यासः- **ॐ अं कँ खँ गँ घँ ङँ आं हृदयाय नमः। ॐ इं चँ छँ जँ झँ ञँ ईं शिरसे स्वाहा। ॐ उं टँ ठँ डँ ढँ णँ ऊं शिखायै वषट्। ॐ एं तँ थँ धँ दँ धँ नँ ऐं कवचाय हुम ॐ ओं पँ फँ बँ भँ मँ औं नेत्रत्रयाय वौषट्। ॐ अं यँ रँ लँ वँ शँ षँ सँ हँ क्षँ अः अस्त्राय फट्।**

ततः पूरकप्राणायामे कण्ठस्थषोडशदलपद्मे - **ॐ अं नमः, आं नमः, इं नमः, ईं नमः, उं नमः, ऊं नमः, ऋं नमः, ॠं नमः, लृं नमः, लॄं नमः, एं नमः, ऐं नमः, ओं नमः, औं नमः, अं नमः, अः नमः-** इति षोडशस्वरान्न्यसेत्।। ततः कुम्भकप्राणायामे हृदयस्थे द्वादशदलपद्मे - **ॐ कँ नमः, खँ नमः, गँ नमः, घँ नमः, ङँ नमः, चँ नमः, छँ नमः, जँ नमः, झँ नमः, ञँ नमः, टँ नमः, ठँ नमः।** इति द्वादशवर्णान्न्यसेत्।। नाभौ दशदलपद्मे - **ॐ डँ नमः, ढँ नमः, णँ नमः, तँ नमः, थँ नमः, दँ नमः, धँ नमः, नँ नमः, पँ नमः, फँ नमः।** इति दशवर्णान्न्यसेत्।। तथाधो लिंगे षड्दलपद्मे - **ॐ बँ नमः, भँ नमः, मँ नमः, यँ नमः, रँ नमः, लँ नमः।** इति षड्वर्णान्न्यसेत्। आधारे गुदे चतुर्दलपद्मे। **ॐ वँ नमः, शँ नमः, षँ नमः, सँ नमः।** इति चतुर्वर्णान्न्यसेत्। ततः रेचके भ्रूमध्ये द्विदलपद्मे - **हँ नमः, क्षँ नमः।** इति द्वौ वर्णौ विन्यसेत्।।

अथ ध्यानम्:-

आधारे लिंगनाभौ प्रकटितहृदये, तालुमूले ललाटे। द्वे पत्रे षोडशारे द्विदशदशदले, द्वादशार्द्धे चतुष्के। वासान्ते वालमध्ये डफकठ सहिते, कण्ठदेशे स्वराणां। हंक्षं तत्त्वार्थयुक्तं सकलदलगतं, वर्णरूपं नमामि।।1।।

यजमान पूजनस्थल पर अपने आसन पर प्राङ्मुख बैठे तथा उसकी पत्नी दाहिनी ओर पीछे, इसके उपरान्त यजमान निम्न न्यासों को करे-

अथ बहिर्मातृकान्यासः-

**ॐ अस्य श्रीबहिर्मातृकान्यासस्य शक्तिः ऋषिर्गायत्रीछन्दः भुवनेश्वरी देवता हं बीजं ईं शक्तिः रं कीलकम् सर्वाभीष्टासिद्ध्यर्थे न्यासे विनियोगः।**

ऋष्यादिन्यासः- **ॐ शक्तिऋषये नमः**- शिरसि। **ॐ गायत्रीच्छंदसे नमः**- मुखे। **ॐ भुवनेश्वर्यै देवतायै नमः**- हृदि। **ॐ हं बीजाय नमः**- गुह्ये। **ॐ ईं शक्तये नमः**- पादयोः। **ॐ रं कीलकाय नमः**- नाभौ। **ॐ सर्वाभीष्टसिद्ध्यर्थे न्यासे विनियोगाय नमः**- सर्वाङ्गे।

करन्यासः- **ॐ ह्रां अंगुष्ठाभ्यां नमः। ॐ ह्रीं तर्जनीभ्यां नमः। ॐ ह्रूं मध्यमां नमः। ॐ ह्रैं अनामिकाभ्यां नमः। ॐ ह्रौं कनिष्ठिकाभ्यां नमः। ॐ ह्रः करतलकरपृष्ठाभ्यां नमः।**

हृदयादिषडङ्गन्यासः- **ॐ ह्रां हृदयाय नमः। ॐ ह्रीं शिरसे स्वाहा। ॐ ह्रूं शिखायै वषट्। ॐ ह्रैं कवचाय हुम्। ॐ ह्रौं नेत्रत्रयाय वौषट्। ॐ ह्रः अस्त्राय फट्।**

**ध्यानम्**

**सिन्दूरारुणविग्रहां त्रिनयनां माणिक्यमौलिस्फुरत्तारानायकशेखरां स्मितमुखीमापीनवक्षोरुहाम्।**
**पाणिभ्यां मणिपूर्णरत्नचषकं रक्तोत्पलं बिभ्रतीं सौम्यां रत्नघटस्थरक्तचरणां ध्यायेत्पराम्बिकाम्।।**
**ॐ भुवनेश्वर्यै नमः, श्रीभुवनेश्वरीं ध्यायामि।**

अथ बहिर्मातृकान्यासः-

**ॐ अं नमः** शिरसि। **ॐ आं नमः** मुखे। **ॐ इं नमः** दक्षिणनेत्रे। **ॐ ईं नमः** वामनेत्रे। **ॐ उं नमः** दक्षिणकर्णे। **ॐ ऊं नमः** वामकर्णे। **ॐ ऋं नमः** दक्षिणनासापुटे। **ॐ ॠं नमः** वामनासापुटे। **ॐ लृँ नमः** दक्षिणकपोले। **ॐ लॄं नमः** वामकपोले। **ॐ एं नमः** ऊर्ध्वोष्ठे। **ॐ ऐं नमः** अधरोष्ठे। **ॐ ओं नमः** ऊर्ध्वदन्तपंक्तौ। **ॐ औं नमः** अधोदन्तपंक्तौ। **ॐ अं नमः** मूर्ध्नि। **ॐ अः नमः** मुखवृत्ते। **ॐ कं नमः** दक्षिणबाहुमूले। **ॐ खं नमः** दक्षिणकूर्परि। **ॐ गं नमः** दक्षिणमणिबन्धे। **ॐ घं नमः** दक्षिणांगुलिमूले। **ॐ ङं नमः** दक्षिणांगुल्यग्रे। **ॐ चं नमः** वामबाहुमूले। **ॐ छं नमः** वामकूर्परि। **ॐ जं नमः** वाममणिबन्धे। **ॐ झं नमः** वामांगुलिमूले। **ॐ ञं नमः** वामांगुल्यग्रे। **ॐ टं नमः** दक्षिणपादमूले। **ॐ ठं नमः** दक्षिणजानुनि। **ॐ डं नमः** दक्षिणगुल्फे। **ॐ ढं नमः** दक्षपदांगुलिमूले। **ॐ णं नमः** दक्षपादांगुल्यग्रे। **ॐ तं नमः** वामपदमूले। **ॐ थं नमः** वामजानुनि। **ॐ दं नमः** वामगुल्फे। **ॐ धं नमः** वामपदांगुलिमूले। **ॐ नं नमः** वामपादांगुल्यग्रे। **ॐ पं नमः** दक्षपार्श्वे। **ॐ फं नमः** वामपर्श्वे। **ॐ बं नमः** पृष्ठे। **ॐ भं नमः** नाभौ। **ॐ मं नमः** उदरे। **ॐ यं त्वगात्मने नमः** हृदये। **ॐ रं असृगात्मने नमः** दक्षांसे। **ॐ लं मांसात्मने नमः** ककुदि। **ॐ वं मेदात्मने नमः** वामांसे। **ॐ शं अस्थ्यात्मने नमः** हृदयादिदक्षहस्तान्तम्। **ॐ षं मज्जात्मने नमः** हृदयादिवामहस्तान्तम्। **ॐ सं शुक्रात्मने नमः** हृदयादिदक्षपादान्तम्। **ॐ हं सर्वात्मने नमः** हृदयादिवामपादान्तम्। **ॐ ळं जीवात्मने नमः** जठरे। **ॐ क्षं परमात्मने नमः** मुखे। एवं बहिर्मातृकान्यासं कृत्वा ध्यायेत्।

**'पंचाशल्लिपिभिर्विभक्तमुखदोर्हृत्पद्मवक्षःस्थलां, भास्वन्मौलिनिबद्धचन्द्रशकलमापीनतुंगस्तनीम्।**
**मुद्रामक्षगुणं सुधाढ्यकलशं विद्यां च हस्ताम्बुजै, बिंभ्राणां विशदप्रभां त्रिनयनां वाग्देवतामाश्रये।।1।।'**

एवं बहिर्मातृकान्यासं कृत्वा तत्तद्देवताकलान्यासं कुर्यात्। तत्र आदौ शारदामातृकान्यासः- विनियोगः- **अस्य शारदाकलामातृकान्यासस्य प्रजापति ऋषिर्गायत्री छन्दः श्रीमातृकाशारदादेवता हलो बीजानि स्वराः शक्तयः चिन्तामणिमन्त्रपुरश्चरणांगत्वेन कलामातृकान्यासे विनियोगः।** ऋष्यादिन्यासः- **ॐ प्रजापतिऋषये नमः** -शिरसि। **ॐ गायत्रीछन्दसे नमः** - मुखे। **ॐ शारदादेवतायै नमः** - हृदये।

ॐ हल्भ्यो बीजेभ्यो नमः - गुह्ये। ॐ स्वरेभ्यः शक्तिभ्यो नमः - पादयोः। ॐ चिन्तामणिमन्त्रपुरश्चरणांगत्वेन शारदा कलामातृकान्यासे विनियोगाय नमः - सर्वांगे। अथ करादिन्यासः- ॐ अं ॐ आं अंगुष्ठाभ्यां नमः ॐ इं ॐ ईं तर्जनीभ्यां नमः। ॐ उं ॐ ऊं मध्यमाभ्यां नमः। ॐ एं ॐ ऐं अनामिकाभ्यां नमः। ॐ ओं ॐ औं कनिष्ठिकाभ्यां नमः। ॐ अं ॐ अः करतलकरपृष्ठाभ्यां नमः अथ हृदयादिन्यासः- ॐ अं ॐ आं हृदयाय नमः। ॐ इं ॐ ईं शिरसे स्वाहा। ॐ उं ॐ ऊं शिखायै वषट्। ॐ एं ॐ ऐं कवचाय हुम्। ॐ ओं ॐ औं नेत्रत्रयाय वौषट्। ॐ अं ॐ अः अस्त्राय फट्। अथ ध्यानम्-

ॐ शंखचक्राब्जपरशुकपालानक्षमालिका:। पुस्तकावमृतकुम्भौ त्रिशूलं दधतीं करैः।
सितपीतासितश्वेतरक्तवर्णैस्त्रिलोचनैः। पंचास्यसंयुतां चन्द्रसकांतिं शारदां भजे।।

इति ध्यात्वा शारदाकलामातृकां न्यसेत्। तद्यथा- ॐ ह्रीं अं निवृत्त्यै नमः - ललाटे। ॐ ह्रीं आं प्रतिष्ठायै नमः - मुखवृत्ते। ॐ ह्रीं इं विधायै नमः - दक्षनेत्रे। ॐ ह्रीं ईं शान्तायै नमः - वामनेत्रे। ॐ ह्रीं उं इन्धिकायै नमः - दक्षकर्णे। ॐ ह्रीं ऊं दीपिकायै नमः - वाम कर्णे। ॐ ह्रीं ऋं रेचिकायै नमः - दक्षनासापुटे। ॐ ह्रीं ॠं मोचिकायै नमः - वामनासापुटे। ॐ ह्रीं लृं परायै नमः - दक्षकपोले। ॐ ह्रीं लॄं सूक्ष्मायै नमः - वामकपोले। ॐ ह्रीं एं सूक्ष्मामृतायै नमः - ऊर्ध्वोष्ठे। ॐ ह्रीं ऐं ज्ञानामृतायै नमः - अधरोष्ठे। ॐ ह्रीं ओं आप्यायन्यै नमः - ऊर्ध्वदंतपंक्तौ। ॐ ह्रीं औं व्यापिन्यै नमः - अधोदंतपंक्तौ। ॐ ह्रीं अं व्योमरूपायै नमः - जिह्वायाम्। ॐ ह्रीं अः अनंतायै नमः - कण्ठे। ॐ ह्रीं कं सुदृढायै नमः - दक्षबाहूमूले। ॐ ह्रीं खं नह्यै नमः - दक्षकूर्परे। ॐ ह्रीं गं स्मृत्यै नमः - दक्ष मणिबंधे। ॐ ह्रीं घं मेधायै नमः - दक्षहस्तांगुलिमूले। ॐ ह्रीं ङं कान्त्यै नमः - दक्षहस्तांगुल्यग्रे। ॐ ह्रीं चं लक्ष्म्यै नमः - वामबाहु मूले। ॐ ह्रीं छं घुत्त्यै नमः - वामकूपरे। ॐ ह्रीं जं स्थिरायै नमः - वाममणिबंधे। ॐ ह्रीं झं स्थित्यै नमः - वामहस्तांगुलिमूले। ॐ ह्रीं ञँ सिद्ध्यै नमः - वामहस्तांगुल्यग्रे। ॐ ह्रीं टं जरायै नमः - दक्षिणपादमूले। ॐ ह्रीं ठं पालिन्यै नमः - दक्षजानुनि। ॐ ह्रीं डं क्षांत्यै नमः - दक्षगुल्फे। ॐ ह्रीं ढं ईश्वर्यै नमः - दक्षपादांगुलिमूले। ॐ ह्रीं णं रत्यै नमः- दक्षपादांगुल्यग्रे। ॐ ह्रीं तं कामिकायै

**नमः।** - वामपादमूले। **ॐ ह्रीं थं वरदायै नमः** - वामजानुनि। **ॐ ह्रीं दं आह्लादिन्यै नमः** - वामगुल्फे। **ॐ ह्रीं धं प्रीत्यै नमः** - वामपादांगुलिमूले। **ॐ ह्रीं नं दीर्घायै नमः** - वामपादांगुल्यग्रे। **ॐ ह्रीं पं तीक्ष्णायै नमः** - वामपार्श्वे। **ॐ ह्रीं बं भयायै नमः** - पृष्ठे। **ॐ ह्रीं भं निद्रायै नमः** - नाभौ। **ॐ ह्रीं मं तंद्रिकायै नमः** - जठरे। **ॐ ह्रीं यं क्षुधायै नमः** - हृदये। **ॐ ह्रीं रं क्रोधिन्यै नमः** - दक्षांसे। **ॐ ह्रीं लं क्रियायै नमः** - ककुदि। **ॐ ह्रीं वं उत्कार्यै नमः** - वामांसे। **ॐ ह्रीं शं मृत्युकायै नमः** - हृदयादिदक्षहस्तांतम्। **ॐ ह्रीं षं पीतायै नमः** - हृदयादिवामहस्तांतम्। **ॐ ह्रीं सं श्वैतायै नमः** - हृदयादिक्षपादांतम्। **ॐ ह्रीं हं अरुणायै नमः** - हृदयादि वामपादान्तम्। **ॐ ह्रीं ळं असितायै नमः** - मूर्द्धादिपादांतम्। **ॐ ह्रीं क्षं अनंतायै नमः** - पादादिमूर्द्धान्तम्। (शंभुभक्तश्चेत् श्रीकण्ठादि मातृकाकलान्यासं वैष्णवस्तु केशवादिन्यासं गणेशभक्तो विघ्नेशादिकलान्यासं शाक्तश्चेत् निवृत्त्यादिकलान्यासं च कुर्यात्। तत्तत्कलान्यासस्तु स्वस्वप्रयोगे स्पष्टो भविष्यति) एवं तत्तद्देवाताकलान्यासं कृत्वा प्राणानायम्य स्वमूलमन्त्रस्य कल्पोदितान् ऋषिच्छन्दोदैवतादिन्यासान् तत्तदंगेषु न्यस्य करन्यासं हृदयादिषडंगन्यासं च कृत्वा पीठन्यासं कुर्यात्।

**अथ पीठन्यास** :- स्वदेहं पीठमयं विचिन्त्य न्यसेत्। तद्यथा- आधारे-**ॐ मं मण्डूकाय नमः।** लिंगे- **ॐ कां कालाग्नये रुद्राय नमः।** नाभौ - **ॐ कूं कूर्माय नमः।** हृदये - **ॐ आं आधारशक्तये नमः । ॐ अं अनंताय नमः। ॐ धं धरायै नमः। ॐ सु सुधासिंधवे नमः। ॐ शं श्वेतद्वीपाय नमः। ॐ सुं सुरांघ्रिपाय नमः। ॐ मं मणिहर्म्याय नमः। ॐ हें हेमपीठाय नमः।** दक्षांसे - **ॐ धं धर्माय नमः।** वामांसे - **ॐ ज्ञां ज्ञानाय नमः।** वामोरौ - **ॐ वैं वैराग्याय नमः।** दक्षोरौ - **ॐ ऐं ऐश्वर्याय नमः।** मुखे - **ॐ अं अधर्माय नमः।** वामपार्श्वे - **ॐ अं अज्ञानाय नमः।** नाभौ - **ॐ अं अवैराग्याय नमः।** दक्षपार्श्वे - **ॐ अं अनैश्वर्याय नमः।** पुनर्हृदये - **ॐ अं अनन्ताय नमः। ॐ तं तत्त्वपक्षाय नमः। ॐ आं आनन्दमयकन्दाय नमः। ॐ सं संविन्नालाय नमः। ॐ विं विकारमयकेसरेभ्यो नमः। ॐ प्रं प्रकृत्यात्मकपत्रेभ्यो नमः। ॐ पं पंचाशद्वर्णकर्णिकायै नमः।** कर्णिकायाम् - **ॐ सूं सूर्यमण्डलाय नमः। ॐ इं इन्दुमण्डलाय नमः। ॐ पां पावकमण्डलाय नमः। ॐ सं सत्त्वाय नमः। ॐ रं रजसे नमः। ॐ तं तमसे नमः। ॐ आं आत्मने**

नमः। ॐ पं परमात्मने नमः। ॐ ज्ञां ज्ञानात्मने नमः। ॐ मां मायातत्त्वाय नमः। ॐ कं कलातत्त्वाय नमः। ॐ विं विद्यातत्त्वाय नमः। ॐ पं परतत्त्वाय नमः। मानसोपचारैः पंचोपचारैर्वा संपूज्य तत्रैव तत्तत्कल्पोक्तपीठशक्तिर्विन्यस्य संपूज्य दिगरक्षणार्थं रक्षोघ्नसूक्तं पठेत्। तत मंत्राः-

ॐ रक्षोहणम्वलगहनम्वैष्णवीमिदमहन्तम्वलगमुत्किरामि यन्मे निष्ठ्यो यममात्यो निचखानेदमहन्तम्वलगमुत्किरामि यन्मे समानो यमसमानो निचखानेदमहन्तं वलगमुत्किरामि यन्मे सबन्धुर्यमसबन्धुर्निचखानेदमहन्तम्वलगमुत्किरामि यन्मे सजातो यमसजातो निचखानोत्कृत्यांगिरामि ।।1।। रक्षोहणौ वौ वलगहनः प्रोक्षामि वैष्णवाण्रक्षोहणौ वौ वलगहनो वनयामि वैष्णवाण्रक्षोहणो वो वलगहनो वस्तृणातमि वैष्णवाण्रक्षोहणो वा वलगहनोऽउपदधामि वैष्णवी रक्षोहणौ वां वलगहनी पूर्यहामि वैष्णवी वैष्णवमसि वैष्णवास्थ ।।2।। रक्षसाम्भागोकसि निरस्तर्ठं रक्षऽइदमहर्ठं रक्षोभिस्तिष्ठामीदमहर्ठं रक्षोऽवबाधऽइदमहर्ठं रक्षो धमन्तमो नयामि धृतेन द्यावापृथिवी प्रोर्णुवाथां वायो वेस्तोकानामग्नि राज्यस्य वेत्तु स्वाहाकृते। ऊर्ध्वनभसं मारुतं गच्छताम्।।3।। रक्षोहा विश्वचर्षणिरभियोनिमयोहते द्रोणासधस्थमासादत।।4।। अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः। ये भूता विघ्नकार्तरस्ते नश्यन्तु शिवाज्ञया।।1।। अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम्। सर्वेषामविरोधेन शान्तिकर्म समारभे।।2।। यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वतः। सर्वेषामविरोधेन शान्तिकर्म समारभे।।3।। यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वतः। स्थानं त्यक्ता तु तत्सर्वं यत्रस्थं तत्र गच्छतु।।4।। भूतप्रेतपिशाचाद्या अपक्रामन्तु राक्षसाः। स्थानादस्माद् व्रजन्त्वन्यत्स्वीकरोमि भुवं त्विमाम्।।5।। भूतानि राक्षसा वापि यत्र तिष्ठन्ति केचन। ते सर्वेऽप्यपगच्छन्तु शान्तिकं तु करोम्यहम्।।6।।

अथ षोडशोपचारपूजनं

चतुष्षष्ठीयोगिनी, वास्तुमण्डलं (पृ.सं. 440, चि. सं. 20 से 23), क्षेत्रपालमण्डलं, नवग्रहमण्डलञ्च स्थापयित्वा भुवनेश्वरीयन्त्र(पृ.सं. 437, चि. यं. 3)/मूर्तिस्थापनम्-सिंहासनोपरि कलशोपरि वा भुवनेश्वरीयन्त्रं/मूर्तिं संस्थापयेत् पूजयेत्।

आवाहनम्

ॐ अदित्यै व्युन्दनमसि विष्णोः स्तुपोस्यूर्णम्रदसं त्वा स्तृणामि स्वासस्थां देवेभ्यो भुवपतये स्वाहा भुवनपतये स्वाहा भूतानांपतये स्वाहा।

ॐ हिरण्यवर्णां हरिणीं सुवर्णरजतस्त्रजाम् चन्द्रां हिरण्यमयीं लक्ष्मीं जातवेदो म आवह।।

आगच्छ वरदे सौम्ये। देत्यदर्पनिषूदिनि। पूजां गृहाण हे देवि! नमस्ते शंकरप्रिये।

ॐ भुवनेश्वर्यै नमः, आवाहनं समर्पयामि। आवाहनार्थे पुष्पं समर्पयामि।

आसनम्

ॐ तां म आवह जातवेदो लक्ष्मीमनपगामिनीम्। यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम्।।

अनेकरत्नसंयुक्तं नानामणिगणान्वितम्। कार्तस्वरमयं दिव्यमासनं प्रतिगृह्यताम्।।

ॐ भुवनेश्वर्यै नमः, आसनं समर्पयामि। आसनार्थे अक्षतान् समर्पयामि।

पाद्यम्

ॐ अश्वपूर्वां रथमध्यां हस्तनादप्रमोदिनीम्। श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम्।

गङ्गादिसर्वतीर्थेभ्य आनीतं तोयमुत्तमम्। पाद्यार्थं ते प्रदास्यामि गृहाण भुवनेश्वरि।।

ॐ भुवनेश्वर्यै नमः, पाद्यं समर्पयामि।

अर्घ्यम्

ॐ कां सोऽस्मितां हिरण्यप्राकारमार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम्। पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम्।।

गन्धपुष्पाक्षतैर्युक्तमर्घ्यं सम्पादितं मया। गृहाण त्वं महादेवि प्रसन्ना भव सर्वदा।

ॐ भुवनेश्वर्यै नमः, अर्घ्यं समर्पयामि।

## मधुपर्कम्

ॐ यन्मधुनो मधव्यं परमꣳ, रूपमन्नाद्यम्। तेनाहं मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो मधव्योऽन्नादोऽसानि।।

आज्यं दधि मधु श्रेष्ठं पात्रयुग्मसमन्वितम्। मधुपर्कं गृहाण त्वं शुभदा भव शोभने।।

ॐ भुवनेश्वर्य्यै नमः, मधुपर्कं समर्पयामि।

## आचमनम्

ॐ चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम्। तां पद्मिनीमीं शरणं प्रपद्येऽलक्ष्मीर्मे नश्यतां त्वां वृणे।।

जातीलवङ्गकङ्कोलकर्पूरादिसुवासितम्। गृहाण देवदेवेशि एतदाचमनीयकम्।।

ॐ भुवनेश्वर्यै नमः, आचमनीयं जलं समर्पयामि।

## स्नानम्

ॐ आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोऽथ बिल्वः। तस्य फलानि तपसा नुदन्तु यान्तरा याश्च बाह्या अलक्ष्मीः।।

मन्दाकिन्याः समानीते हेमाम्भोरुहवासितैः। स्नानं कुरुष्व देवेशि सलिलैश्च सुगन्धिभिः।।

ॐ भुवनेश्वर्यै नमः, स्नानीयं जलं समर्पयामि। पुनराचमनीयं जलं समर्पयामि।

## पञ्चामृतस्नानम्

ॐ पञ्च नद्यः सरस्वतीमपियन्ति सस्त्रोतसः। सरस्वती तु पञ्चधासो देशेऽभवत्सरित्।।

पयो दधि घृतं चैव मधु च शर्करान्वितम्। पञ्चामृतं मयाऽऽनीतं स्नानार्थं प्रतिगृह्यताम्।।

ॐ भुवनेश्वर्यै नमः, पञ्चामृतस्नानं समर्पयामि। शुद्धोदकस्नानं समर्पयामि। आचमनीयं जलं समर्पयामि।

गन्धस्नानम्

ॐ त्वां गन्धर्वा अखनस्त्वामिन्द्रस्त्वां बृहस्पतिः। त्वामोषधे सोमो राजा विद्वान्यक्ष्मादमुच्यत।।

मलयाचलसम्भूतं चन्दनागुरुसम्भवम्। चन्दनं देवि देवेशि स्नानार्थं प्रतिगृह्यताम्।

ॐ भुवनेश्वर्यै नमः, गन्धोदकस्नानं समर्पयामि। शुद्धोदकस्नानं समर्पयामि। आचमनीयं जलं समर्पयामि।

उद्वर्तनस्नानम्

ॐ अꣳशुनाते अꣳशुः पृच्यतां परुषा परुः। गन्धस्ते सोममवतु मदाय रसो अच्युतः।।

नानासुगन्धिद्रव्यं च चन्दनं रजनीयुतम्। उद्वर्त्तनं मया दत्तं स्नानार्थं प्रतिगृह्यताम्।।

ॐ भुवनेश्वर्यै नमः उद्वर्तनस्नानं समर्पयामि। शुद्धोदकस्नानं समर्पयामि। आचमनीयं जलं समर्पयामि।

कदलीजलस्नानम्

ॐ कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे। उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यतऽ आदित्येभ्यस्त्वा।।

ॐ भुवनेश्वर्यै नमः, कदलीजलस्नानं समर्पयामि।

पुष्करतीर्थजलस्नानम्

ॐ अपां पृष्ठामसि योनिरग्ने समुद्रमभितः पिन्वमानम्। वर्धमानो महाँ2ऽआ च पुष्करे दिवो मात्रया वरिम्णा प्रथस्व।।

ॐ भुवनेश्वर्यै नमः, पुष्करतीर्थजलस्नानं समर्पयामि।

तीर्थजलस्नानम्

ॐ सरोभ्यो धैवरमुपस्थावराभ्यो दाशं वैशन्ताभ्यो वैन्दं नड्वलाभ्यः शौष्कलं पाराय मार्गारमवाराय केवर्तं तीर्थेभ्य आन्दं

विषमेभ्यो मैनालर्ठ. स्वनेभ्य: पर्णकं गुहाभ्य: किरातर्ठं. सानुभ्यो जम्भक पवर्तेभ्य: किंपूरूषम्।।
तीर्थान्तरसमानीतं जलं सौखविवर्धनम्। स्नानार्थं गृह्यतां देवि! प्रसीद भुवनेश्वरि!।।
ॐ भुवनेश्वर्यै नम:, तीर्थजलस्नानं समर्पयामि।

## सुवर्णजलस्नानम्

ॐ प्रथमा वार्ठ० सरथिना सुवर्णा देवौ पश्यन्तौ भुवनानि विश्वा अपित्र चोदना वां मिमाना होतारा ज्योति: प्रदिशा दिशन्ताम्।।
सुवर्णवर्णसम्मिश्रं सौवर्णं गुणसंयुतम्। मया निवेदितं भक्त्या स्नानं कुरु भुवनेश्वरि!।।
ॐ भुवनेश्वर्यै नम:, सुवर्णजलं स्नानं सपर्मयामि।

## महाभिषेकस्नानम्

आचार्य भुवनेश्वरी देवी का महाभिषेक स्नान श्रीसूक्त के मन्त्रों द्वारा यजमान से करावें।

ॐ हिरण्यवर्णां हरिणीं सुवर्णरजतस्त्रजाम्। चन्द्रां हिरणमयीं लक्ष्मीं जातवेदो म आ वह।।1।। तां म आवह जातवेदो लक्ष्मीमनपगामिनीम्। यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम्।।2।। अश्वपूर्वां रथमध्यां हस्तिनादप्रमोदिनीम्। श्रियं देवीमुपह्वये श्रीर्मादेवी जुषताम्।।3।। कां सोऽस्मितां हिरण्यप्राकारामार्दां ज्वलन्तीं तृप्तां तर्पयन्तीम्। पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम्।।4।। चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम्। तां पद्मिनीमीं शरणं प्रपद्येऽलक्ष्मीर्मे नश्यतां त्वां वृणे।।5।। आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोऽथ बिल्व:। तस्य फलानि तपसा नुदन्तु या अन्तरा याश्च बाह्या अलक्ष्मी:।।6।। उपैतु मां देवसख: कीर्तिश्च मणिना सह। प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातु मे।।7।। क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम्। अभूतिमसृद्धिं च सर्वां निर्णुद मे गृहात्।।8।। गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां

तामिहोपह्वये श्रियम्।।9।। मनसः काममाकूतिं वाचः सत्यमशीमहि। पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ।।10।। कर्दमेन प्रजाभूता मयि संभव कर्दम। श्रियं वासय मे कुले मातरं पद्ममालिनीम्।।11।। आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे। नि च देवीं मातरं श्रियं वासय मे कुले।।12।। आर्द्रां पुष्करिणीं पुष्टिं पिंगलां पद्ममालिनीम्। चन्द्रां हिरणमयीं लक्ष्मीं जातवेदो म आ वह।।13।। आर्द्रां यः करिणीं यष्टिं सुवर्णां हेममालिनीम्। सूर्यां हिरणमयीं लक्ष्मीं जातवेदो म आ वह।।14।। तां म आवह जातवेदो लक्ष्मीमनपगमिनीम्। यस्यां हिरण्यं च प्रभूतं गावो दास्योऽश्वान् विन्देयं पुरुषानहम्।।15।। यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम्। सूक्तं पञ्चदशर्चं च श्रीकामः सततं जपेत्।।16।। ॐ शुद्धवालः सर्वशुद्धवालो मणिवालस्त आश्विनाः। श्येतः श्येताक्षोऽरुणस्ते रुद्राय पशुपतये कर्णा या मा अवलिप्ता रौद्रा नभोरूपाः पार्जन्याः।।

शुद्धं यत्सलिलं दिव्यं गङ्गाजलसमं स्मृतम्। समर्पितं मया भक्त्या स्नानार्थं प्रतिगृह्यताम्।

ॐ भुवनेश्वर्यै नमः, शुद्धोदकस्नानं समर्पयामि। शुद्धोदकस्नानान्ते आचमनीयं जलं समर्पयामि।

वस्त्रम्

ॐ उपैतु मां देवसखः कीर्तिश्च मणिना सह। प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातु मे।।

वस्त्रञ्च सोमदैवत्यं लज्जायास्तु निवारणम्। मया निवेदितं भक्त्या गृहाण परमेश्वरि।।

ॐ भुवनेश्वर्यै नमः, वस्त्रद्वयं समर्पयामि। आचमनीयं जलं समर्पयामि।

रमणीयपटवस्त्रम्

ॐ औषधीरिति मातरस्तद्वो देवीरुपब्रुवे। सनेयमश्वं गां वास आत्मानं तव पूरुष।।

ॐ भुवनेश्वर्यै नमः, रमणीयपटवस्त्रं समर्पयामि।

## उत्तरीयवस्त्रम्

ॐ पयसो रेत आभृतं तस्य दोहमशीमह्युत्तरामुत्तरां समाम्। त्विषः संवृक् क्रत्वे दक्षस्य ते सुषुम्णस्यते सुष्मणाग्निहुतः। इन्द्रपीतस्य प्रजापतिभक्षितस्य मधुमत उपहूत उपहूतस्य भक्षयामि।।

ॐ भुवनेश्वर्यै नमः, उत्तरीयवस्त्रं समर्पयामि।

## रमणीयवस्त्रम्

ॐ यदश्वाय वास उपस्तृणन्त्यधीवासं या हिरण्यान्यस्मै। संदानमर्वन्तं पड्वीशं प्रियो देवेष्वायामयन्ति।

ॐ भुवनेश्वर्यै नमः, रमणीयवस्त्रं समर्पयामि।

## शीतकालीनवस्त्रम्

ॐ ऊर्ध्वमेनमुच्छ्रयताद्गिरौ भारं हरन्निव। अथास्य मध्यमेजतु शीते वाते पुनन्निव।।

ॐ भुवनेश्वर्यै नमः, शीतकालीनवस्त्रं समर्पयामि।

## यज्ञोपवीतम्

ॐ क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम्। अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात्।।
स्वर्णसूत्रमयं दिव्यं ब्रह्मणा निर्मितं पुरा। उपवीतं मया दत्तं गृहाण परमेश्वरि।।

ॐ भुवनेश्वर्यै नमः, यज्ञोपवीतं समर्पयामि। यज्ञोपवीतान्ते आचमनीयं जलं समर्पयामि।

## सौभाग्यसूत्रम्

सौभाग्यसूत्रं वरदे! सुवर्णमणिसंयुतम्। कंठे बध्नामि देवेशि! सौभाग्यं देहि मे सदा।।

ॐ भुवनैश्वर्यै नमः, सौभाग्यसूत्रं समर्पयामि।।

## अक्षतान्

ॐ अक्षन्नमीमदन्त ह्यव प्रिया अधूषत। अस्तोषत स्वभानवो विप्रानविष्ठया मती योजान्विन्द्रते हरी।।

अक्षतान्निर्मलान् दिव्यान् कुङ्कुमाक्तान् सुशोभनान्। गृहाणेमान् महादेवि प्रसीद परमेश्वरि।।

ॐ भुवनैश्वर्यै नमः, अक्षतान् समर्पयामि।

## चन्दनम्

ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्।।

श्रीखण्डं चन्दनं दिव्यं गन्धाढ्यं समुनोहरम्। विलेपनं च देवेशि चन्दनं प्रतिगृह्यताम्।।

ॐ भुवनेश्वर्यै नमः, चन्दनं समर्पयामि।

## हरिद्राचूर्णम्

हरिद्रारञ्जिते देवि सुखसौभाग्यदायिनी। तस्मात्त्वां पूजयाम्यत्र सुखं शान्तिं प्रयच्छ मे।।

ॐ भुवनेश्वर्यै नमः, हरिद्राचूर्णं समर्पयामि।

## कुङ्कुमम्

ॐ उस्त्रावेतं धूर्षाहौ युज्येथामश्रू ऽअवीरहणौ ब्रह्मचौदनौ। स्वस्ति यजमानस्य गृहान् गच्छतम्।

कुङ्कुमं कान्तिदं दिव्यं कामिनीकामसम्भवम्। कुङ्कुमेनार्चिते देवि! प्रसीद परमेश्वरि।।

ॐ भुवनेश्वर्यै नमः, कुङ्कुमं समर्पयामि।

## सिन्दूरम्

ॐ सिन्धोरिव प्राध्वने शूघनासो वातप्रमियः प्रतयन्ति यह्वाः घृतस्य धारा अरुषो न वाजी काष्ठा भिन्दन्नूर्मिभिः पिन्वमानः।।

सिन्दूरमरुणाभासं जपाकुसुमसन्निभम्। पूजिताऽसि मया देवि! प्रसीद परमेश्वरि!।।
ॐ भुवनैश्वर्यैः, सिन्दूरं समर्पयामि।

### कज्जलम्

ॐ वृत्रस्यासि कनीनकदंश्चक्षुर्द्दा असि चक्षुर्म्मे देहि।।
चक्षुर्भ्यां कज्जलं रम्यं सुभगे शान्तिकारकम्। कर्पूरज्योतिरुत्पन्नं गृहाण परमेश्वरि।।
ॐ भुवनेश्वर्यै नमः, कज्जलं समर्पयामि।

### दूर्वाम्

ॐ काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि। एवा नो दूर्वे प्रतनु सहस्त्रेण शतेन च।।
दूर्वादले श्यामले त्वं महीरूपे हरिप्रिये। दूर्वाभिराभिर्भवतीं पूजयामि सदा शिवे।।
ॐ भुवनेश्वर्यै नमः, दूर्वाङ्कुरान् समर्पयामि।

### बिल्वपत्राणि

ॐ नमो बिल्विने च कवचिने च नमो वर्मिणे च वरूथिने च नमः। श्रुताय च श्रुतसेनाय च नमो दुन्दुभ्याय च हनन्याय च।।
ॐ भुवनेश्वर्यै नमः, बिल्पपत्राणि समर्पयामि।

### पुष्पमालाम्

ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्। इष्णन्निषाणामुम्म इषाणा सर्वलोकम्म इषाण।।
पद्म-शङ्खज-पुष्पादिशतपत्रैर्विचित्रताम्। पुष्पमालां प्रयच्छामि गृहाण भुवनेश्वरि।।
ॐ भुवनेश्वर्यै नमः, पुष्पमालां समर्पयामि।

पारिजातपुष्पमालाम्

ॐ पथस्पथः परिमतिं वचस्या कामेन कृतो अभ्यानडकर्म् स नो रासच्छुरुधश्चन्द्राग्रा धियं धियठं० सीषधाति प्रपूषा।।

ॐ भुवनेश्वर्यै नमः, पारिजातपुष्पमालां समर्पयामि।

मन्दारपुष्पमालाम्

ॐ तं वो दस्ममृतीषहं वसोर्मन्दानमन्धसः। अभि वत्सं न स्वसरेषु धेनव इन्द्रं गीर्भिर्नवामहे।।

मन्दारपुष्पमालां त्वां प्रयच्छामि भुवनेश्वरि!। गृहाण सुमुखीभूय प्रसन्न भव सर्वदा।।

ॐ भुवनेश्वर्यै नमः, मन्दारपुष्पमालां समर्पयामि।

करजापुष्पमालाम्

ॐ तान्पूर्वया निविदा हूमहे वयं भगं मित्रमदितिं दक्षमस्त्रिधम्। अर्यमणं वरुणठं० सोममश्विना सरस्वती नः सुभगा मयस्करत्।।

महादेवि! महामाये! सर्वशक्तिस्वरूपिणि! करजां पुष्पमालां त्वं गृहाण भुवनेश्वरि!।।

ॐ भुवनेश्वर्यै नमः, करजापुष्पमालां समर्पयामि।

करवीरपुष्पमालाम्

ॐ ओषधयः प्रतिगृभ्णीत पुष्पवतीः सुपिप्पलाः। अयं वो गर्भ ऋत्वियः प्रत्नठं० सधस्थमासदत।।

करवीरकृतां मालां शुद्धां च पुण्यकारिणीम्। भक्त्या निवेदितं देवि! प्रसन्ना वरदा भव।।

ॐ भुवनेश्वर्यै नमः, करवीरपुष्पमालां समर्पयामि।

नानापरिमलद्रव्यम्

अबीरं च गुलालं च हरिद्रादिसमन्वितम्। नानापरिमलं द्रव्यं गृहाण परमेश्वरि।।

ॐ भुवनेश्वर्यै नमः, नानापरिमलद्रव्याणि समर्पयामि।

सौभाग्यद्रव्याणि

ॐ कर्दमेन प्रजा भूता मयि सम्भव कर्दम। श्रियं वासय मे कुले मातरं पद्मालिनीम्।।

हरिद्रा कुङ्कुमं चैव सिन्दूरादिसमन्वितम्। सौभाग्यद्रव्यमेतद्वै गृहाण परमेश्वरि।

ॐ भुवनेश्वर्भै नमः, सौभाग्यद्रव्याणि समर्पयामि।

शृङ्गारपेटिकाम्

ॐ वयं नाम प्रब्रवामा घृतस्यास्मिन् यो धारयामा नमोभिः। उप ब्रह्मा शृणवच्छस्यमानं चतुःशृङ्गोऽवमीद् गौरऽएतत्।।

सौन्दर्यान्वितसंसारे शृङ्गारस्य सुसाधनाम्। शृङ्गारपेटिकां देवि! गृहीत्वा रक्ष सर्वदा।।

ॐ भुवनेश्वर्यै नमः, शृङ्गारपेटिकां सपर्मयामि।

कण्ठसूत्रम्

ॐ उग्रं लोहितेन मित्रर्ठ० सौव्रत्येन रुद्र दौर्व्रत्येनेन्द्रं प्रक्रीडेन मरुतो बलेन साध्नान्प्रमुदा। भवस्य कण्ठ्यर्ठ० रुद्रस्यान्तः पश्र्व्यं

महादेवस्य यकृच्छर्वस्य वनिष्ठुः पशुपतेः पुरीतत्।

नाना आभूषणानि

स्वभावसुन्दराङ्गायै नानाशक्त्याश्रिते शिवे।। भूषणानि विचित्राणि कल्पयाम्यमरार्चिते।।

ॐ भुवनेश्वर्यै नमः, नानाआभूषणानि समर्पयामि।।

सौभाग्यपेटिकाम्

सौभाग्यद्रव्यसंयुक्तां पेटिकां हे भुवनेश्वरि!। गृहाण त्वं मया दत्तां सौभाग्यं सर्वदा कुरु।।

ॐ भुवनेश्वर्यै नमः, सौभाग्यपेटिकां समर्पयामि।

सुगन्धिद्रव्यम्

ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात्।।

चन्दनागरुपूरैः संयुतं कुङ्कुमं तथा। कस्तूर्यादिसुगन्धांश्च सर्वाङ्गेषु विलेपनम्।।

ॐ भुवनेश्वर्यै नमः, सुगन्धिद्रव्यं समर्पयामि।

अंगपूजनम्

ॐ अङ्गान्यात्मन्भिषजा तदश्विनात्मानमङ्गे समधात्सरस्वती। इन्द्रस्य रूपꣳशतमानमायुश्चन्द्रेण ज्योतिरमृतं दधानाः।।

पुनः **ॐ ब्राह्म्यै नमः**-भाले। **ॐ माहेश्वर्यै नमः**-वामांसे। **ॐ कौमार्यै नमः**-वामपार्श्वे। **ॐ वैष्णव्यै नमः**-जठरे। **ॐ वाराह्यै नमः**-दक्षिणपार्श्वे। **ॐ इन्द्राण्यै नमः**-दक्षिणांसे। **ॐ चामुण्डायै नमः**-कण्ठे। **ॐ महालक्ष्म्यै नमः**-हृदि। तदनन्तर भुवनेश्वरी स्तुति (पृ.सं. 88) और भ्रमराम्बाटकस्तोत्र का पाठ करें, (पृष्ठ संख्या 92) में देखें।

## अथ चिन्तामणिप्रयोगः :-

ॐ अस्य श्रीचिन्तामण्याख्यभुवनेश्वरीमन्त्रस्य शक्तिर्ऋषिर्गायत्रीच्छन्दो भुवनेश्वरी देवता, हकारो बीजम्, ईकारः शक्तिः, रेफः कीलकं, मम चतुर्वर्गफलसिद्ध्यर्थे जपे विनियोगः।

अथ ऋष्यादिन्यासः- **ॐ अस्य श्रीचिन्तामण्याख्यभुवनेश्वरीमन्त्रस्य शक्तिऋषये नमः** - शिरसि। **ॐ गायत्रीच्छन्दसे नमः** - मुखे। **ॐ श्रीभुवनेश्वरीदेवतायै नमः** - हृदये। **ॐ हकारबीजाय नमः** - गुह्ये। **ॐ ईकारशक्तये नमः** - पादयोः। **ॐ रकारकीलकाय नमः** - नाभौ। **ॐ मम चतुर्वर्गफलसिद्ध्यर्थे जपे विनियोगाय नमः** - सर्वांगे।

अथ करादिन्यास :-

| मन्त्राः | हृदयादिन्यासः | करन्यासः |
|---|---|---|
| **ॐ ह्रां नमः –** | **हृदयाय नमः।** | **अंगुष्ठाभ्यां नमः।** |
| **ॐ ह्रीं नमः –** | **शिरसे स्वाहा।** | **तर्जनीभ्यां नमः।** |
| **ॐ ह्रूं नमः –** | **शिखायै वषट्।** | **मध्यमाभ्यां नमः।** |
| **ॐ ह्रैं नमः –** | **कवचाय हुम्।** | **अनामिकाभ्यां नमः।** |
| **ॐ ह्रौं नमः –** | **नेत्रत्रयाय वौषट्।** | **कनिष्ठिकाभ्यां नमः।** |
| **ॐ ह्रः नमः –** | **अस्त्राय फट्।** | **करतलकरपृष्ठाभ्यां नमः।** |

अथ ध्यानं :-

**बालरविद्युतिमिन्दुकिरीटां तुंगकुचां नयनत्रययुक्ताम्।**
**स्मेरमुखीं वरदाङ्कुशपाशाभीतिकरां प्रभजे भुवनेशीम्।।**

तदनन्तरं – **'ॐ ह्रीं ॐ'** इति त्र्यक्षरीचिन्तामण्याख्यभुवनेश्वरीमन्त्रस्य जपं कुर्यात्।।

तदनन्तर भुवनेश्वर्यष्टोत्तरशतनमास्तोत्र का पाठ करें, पृष्ठ संख्या 91 में देखें।

अत्रावधेयं :-

1. कृष्णपक्षत्रयोदश्यां रात्रौ ताम्रपत्रे भोजपत्रे वा मूलमंत्रं विलिख्य सप्तशतीं पठित्वा पायसं (खीर) नैवेद्ये समर्प्य साष्टांगप्रणामं कुर्यात्
2. कृष्णपक्षस्य अष्टम्यां चतुर्दश्यां च प्रातःकाले सर्वस्वार्पणं तदर्थप्रार्थनां च कर्तव्यं, नान्यत्किंचित्कर्तव्यं भवति।
3. नित्यपूजायां फलं, गुडं, घृतं, मधु, अश्मशर्करा (मिश्री), शर्करा वा नैवेद्ये देया।
4. पूर्वाभिमुखो उत्तराभिमुखो वा उपविश्य निश्चितासने देशे काले च जपं कर्तव्यं।

अथावशिष्टोपचाराः- धूपं- वनस्पतिरसोद्भूतो गन्धाढ्यो गन्ध उत्तम। आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम्।। ॐ भूर्भुवःस्वः सपत्नीकनवनागदेवताभ्यो नमः, युष्मभ्यं धूपमाघ्रापयामि।

दीपं- साज्यं च वर्तिसंयुक्तं वह्निना योजितं मया। दीपं गृहाण नागेश त्रैलोक्यतिमिरापहम्।। ॐ भूर्भुवःस्वः सपत्नीकनवनाग देवताभ्यो नमः, युष्मभ्यं दीपं दर्शयामि।

नैवेद्यं- क्षीराज्यगुडसंयुक्तं रंभादिफलमिश्रितं। नैवेद्यं गृह्यतां दिव्यं अनन्ताय नमो नमः।। नैवेद्यं गृह्यतां देव क्षीराज्यदधिमिश्रितं। नानापक्वान्नसंयुक्तं पायसं शर्करायुतं।। ॐ भूर्भुवःस्वः सपत्नीकनवनागदेवताभ्यो नमः, युष्मभ्यं नैवेद्यं निवेदयामि।

फलं- इदं फलं मया देव स्थापितं पुरतस्तव। तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि।।

ॐ भूर्भुवःस्वः सपत्नीकनवनागदेवताभ्यो नमः, युष्मभ्यं फलं निवेदयामि।

ताम्बूलं- पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतं। एलालवंगसंयुक्तं ताम्बूलं प्रतिगृह्यताम्।। ॐ भूर्भुवःस्वः सपत्नीकनवनागदेवताभ्यो नमः, युष्मभ्यं मुखशुद्ध्यर्थे ताम्बूलं समर्पयामि।

द्रव्यदक्षिणा- हिरण्यगर्भ गर्भस्थं हेमबीजं विभावसोः। अनन्तपुण्यफलदां अतः शान्तिं प्रयच्छ मे।। न्यूनातिरिक्तपूजायां संपूर्ण फलहेतवे। दक्षिणां कांचनीं देव स्थापयामि तवाग्रतः।। ॐ भूर्भुवःस्वः सपत्नीकनवनागदेवताभ्यो नमः, युष्मभ्यं कृताया पूजाया साद्गुण्यार्थे द्रव्यदक्षिणां समर्पयामि।

नीराजनं- कदलीगर्भसंभूतं कर्पूरं तु प्रदीपितं। आरार्तिक्यमहं कुर्वे गृहाण वरदो भव।। ॐ भूर्भुवःस्वः सपत्नीकनवनागदेवताभ्यो नमः, युष्मभ्यं आरार्तिक्यं समर्पयामि।

पुष्पांजलिः- ॐ यज्ञेन यज्ञमयजन्त ........., नाना सुगन्धि पुष्पाणि .........।। ॐ भूर्भुवःस्वः सपत्नीकनवनागदेवताभ्यो नमः, युष्मभ्यं मंत्रपुष्पांजलिं समर्पयामि।।

अथ राहु-काल-सर्पाणां विशेषप्रार्थनाकवचस्तोत्रादिपाठं कुर्यात्।।

तत्रादौ राहुप्रार्थना - **कायहीनो महाशक्तिर्ग्रसते शशिभास्करौ। सिंहिकेयो महावीर्यो राहुः प्रीतो भवेन्मम।1। महाशिरा महावक्त्रो दीर्घदंष्ट्रो महाबलः। अतनुश्चोर्ध्वकेशश्च पीडां हरतु मे शिखी।2। किरीटिनं करालवदनं खड्गचर्मशूलधरं सिंहासनस्थं पूर्वदेशजं आंगीरसमार्षं अनुष्टुप्छन्दसं कृष्णाम्बरधरं कृष्णाभरणभूषितं कृष्णगन्धानुलेपनं कृष्णध्वजछत्रपताकिनं मुकुटकेयूरमणिशोभितं आरुह्य रथं दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवताकालसहितं प्रत्यधिदेवतासर्पसहितं दक्षिणाभिमुखं राहुं सदा नमाम्यहम्।**

अथ राहुकवचं - **अस्य श्रीराहुकवचस्तोत्रमहामंत्रस्य कश्यप ऋषिः, अनुष्टुप्छन्दः, राहुर्देवता, राहुप्रीत्यर्थे पाठे विनियोगः। ॐ रां अंगुष्ठाभ्यां नमः, ॐ रीं तर्जनीभ्यां नमः, ॐ रूं मध्यमाभ्यां नमः, ॐ रैं अनामिकाभ्यां नमः, ॐ रौं कनिष्ठिकाभ्यां नमः, ॐ रः करतलकरपृष्ठाभ्यां नमः** - इति करन्यासः। एवं हृदयादिन्यासः कर्तव्यः। **ॐ भूर्भुवस्स्वरोमिति दिग्बन्धः। प्रणमामि सदा राहुं शूर्पाकारं किरीटिनं। सैंहिकेयं करालास्यं भक्तानां अभयप्रदं।1। राहुं चतुर्भुजं चर्मखड्गशूलवरांकितम्। कृष्णमाल्यांबरधरं कृष्णगन्धानुलेपिनम्।2। गोमेधकविभूषं च विचित्रमुकुटोज्वलम्। कृष्णसिंहस्थं यान्तं मेरुं चैव प्रदक्षिणम्।3। नीलाम्बरो शिरः पातु ललाटं लोकवन्दितः। चक्षुषी पातु मे राहुः श्रोत्रे त्वर्धशरीरवान्।4। नासिकां मे करालास्यः शूलपाणिर्मुखं मम। जिह्वां मे सिंहिकासूनुः कंठं मे कष्टनाशनः।5। भुजंगेशो भुजौ पातु नीलमाल्यः करौ मम। पातु वक्षः तपोमूर्तिः पातु कुक्षिं विधुंतुदः ।6। कटिं मे विकटः पायादूरू मे सुरपूजितः। स्वर्भानुर्जानुनी पातु जंघे मे पातु जाड्यहा।7। गुल्फौ ग्रहाधिपः पातु नील चन्दनभूषितः। पादौ नीलांबरः पातु सर्वांगं सिंहिकासुतः।8। प्रातः भुजंगमः पातु संगवे सिंहिकासुतः। मध्याह्ने पातु मां राहुः सायं सप्ताश्वमर्दनः।9। प्रदोषे पन्नगः पायादर्धरात्रेऽर्धविग्रहः। सुरारिः सर्वदा पायाद्दुर्गान्मां दानवोऽवतु।10। राहोरिदं**

**कवचमीप्सितदायकं यः, भक्त्या पठेदनुदिनं नियतान्तरात्मा। प्राप्नोति कीर्तिममलं समृद्धिमिष्टाम्, आरोग्यमायुरतुलं विरुजं शरीरं।11।** इति श्रीपद्मपुराणस्थराहुकवचं संपूर्ण।

अथ राहुस्तोत्रं – **राहुर्दानवमंत्री च सिंहिकाचित्तनंदनः। अर्धकायः सदा क्रोधी चंद्रातीत्यमर्दनः।1। रौद्रो रुद्रप्रियो दैत्यः स्वर्भानुर्भानुभीतिदः। ग्रहराजः सुधापायी राकातिथ्यभिलाषकः।2। कालदृष्टिः कालरूपः श्रीकंठहृदयाश्रयः। विधुंतुदः सैंहिकेयो घोररूपो महाबलः।3। ग्रहपीडाकरो दंष्ट्री रक्तनेत्रो महोदरः। पंचविंशति नामानि स्मृत्या राहुं सदा नरः।4। यः पठेत् महती पीडा तस्य नश्यति निश्चितं। आरोग्यं पुत्रमतुलं श्रियं धान्यं पशून्तथा ।5। ददाति राहुस्तस्मै यः पठते स्तोत्रमुत्तमम्। सततं पठितं यस्तु जीवेत् वर्षशतं नरः।6।** इति स्कन्दपुराणस्थराहुस्तोत्रं संपूर्ण। अथ पुष्पार्चनं – **ॐ भ्रां भ्रीं भ्रौं सः ॐ भूर्भुवःस्वः । ॐ कया नश्चित्र कया भुवदूती सदा वृधः सखा। कया शचिष्टया वृता। ॐ स्वः भुवः भूः ॐ सः भ्रौं भ्रीं भ्रां ॐ नमः।1। ॐ ह्रीं अर्धकायं महावीर्यं चंद्रादित्यविमर्दनं। सिंहिकागर्भसंभूतं तं राहुं प्रणमाम्यहं।2। ॐ राहवे नमः।3।** इति मंत्रत्रयेण पुष्पाणि समर्पयित्वा विशेषार्घ्यं दद्यात् – **राहुग्रहः सदाक्रूरः सोमसूर्यस्य पीडकः। शान्त्यर्थं तु मया दत्तोऽर्घ्योऽयं प्रतिगृह्यताम्।।**

कालप्रार्थना – **यमो निहन्ता पिता धर्मराजो वैवस्वतो दंडधरश्च कालः। प्रेताधिपो दत्तकृपानुसारी कृतांत एतद् दशभिर्जपन्तः।1। धर्मराज महाकाय दक्षिणाधिप ते नमः। रक्तेक्षण महाबाहो मम पीडां निवारय।2।** अथ पुष्पार्चनं– **ॐ श्री यमाय नमः, ॐ श्री निहन्त्रे नमः, ॐ श्री पित्रे नमः, ॐ श्री धर्मराजाय नमः, ॐ श्री वैवस्वताय नमः, ॐ श्री दंडधराय नमः, ॐ श्री कालाय नमः, ॐ श्री प्रेताधिपाय नमः, ॐ श्री दत्तकृपानुसारिणे नमः, ॐ श्रीकृतान्ताय नमः।**

अथ सर्पप्रार्थना – (इसमें जहाँ– जहाँ 'कालिय' शब्द है वहाँ–वहाँ यजमान के जन्मकुण्डलि में विद्यमान कालसर्प योग के नाम को जोड़कर प्रार्थना करें।) '*कालियो* **नाम नागोऽसौ कृष्णस्य पादपांशुना। रक्षा ताक्ष्र्येण संप्राप्तः सोऽभयं ददातु नः।1।** *कालियो* **नाम नागोऽसौ विषरूपो भयंकरः। नारायणेन संपुष्टो सदा शं विदधातु नः।2।** *कालियो* **नाम नागोऽयं ज्ञातो सर्वैर्महाबली।**

अभयं प्राप्तं कृष्णेन निर्भयो विचरत्यहि।3। सो *कालिय* स्वदोषाच्च निर्भयं कुरु मां सदा। अनेन पूजनेनाथ प्रीतो सुखकरो भवेत् ।4। बलिं प्राप्य स्वकीयां हि चाभिलाषं प्रयच्छतु। कालसर्पस्य दोषोऽयं शान्तो भवतु सर्वथा।5। तृप्तो नागः प्रयच्छ मे धन धान्यादिसम्पदः। जले विहर त्वं नाग मां हि शान्तिप्रदो भव।6। अथ सर्पसूक्तम्- ब्रह्मलोके च ये सर्पाः शेषनागपुरोगमाः। नमोऽस्तु तेभ्यः सुप्रीताः प्रसन्नाः सन्तु मे सदा।1। विष्णुलोके ये सर्पाः वासुकीप्रमुखाश्च ये। नमोऽस्तु0 ।2। रुद्रलोके च ये सर्पाः तक्षकप्रमुखास्तथा। नमोऽस्तु0 ।3। खाण्डवस्य तथा दाहे स्वर्गं ये च समाश्रिताः। नमोऽस्तु0 ।4। सर्पसत्रे च ये सर्पाः आस्तिकेन रक्षिताः। नमोऽस्तु0 ।5। प्रलये चैव ये सर्पाः कर्कोटकप्रमुखाश्च ये। नमोऽस्तु0 ।6। धर्मलोके च ये सर्पाः वैतरण्यां समाश्रिताः। नमोऽस्तु0 ।7। ये सर्पाः पार्वतीयेषु दरीसंधिषु संस्थिताः। नमोऽस्तु0 ।8। ग्रामे वा यदि वाऽरण्ये ये सर्पाः प्रसरन्ति हि। नमोऽस्तु0 ।9। पृथिव्यां चैव ये सर्पा ये सर्पा बिलसंस्थिताः । नमोऽस्तु0 ।10। रसातले च ये सर्पा अनन्ताद्या महाबलाः। नमोऽस्तु0 ।11।

अथ नवनागनामस्तोत्रम् – अनंतं वासुकिं शेषं पद्मनाभं च कम्बलं। शंखपालं धार्तराष्ट्रं तक्षकं कालियं तथा।1। एतानि नवनामानि नागानां च महात्मनां। सायंकाले पठेन्नित्यं प्रातःकाले विशेषतः।2। तस्मै विषभयं नास्ति सर्वत्र विजयी भवेत्।3। अथ पुष्पार्चनं – ॐ श्री अनन्ताय नमः, ॐ श्री वासुकये नमः, ॐ श्री शेषाय नमः, ॐ श्री पद्मनाभाय नमः, ॐ श्री कम्बलाय नमः, ॐ श्री शंखपालाय नमः, ॐ श्री धार्तराष्ट्राय नमः, ॐ श्री तक्षकाय नमः, ॐ श्रीकालियाय नमः। ॐ नवकुलाय विद्महे विषदन्ताय धीमहि। तन्नः सर्पः प्रचोदयात्।। पुष्पाणि समर्प्य कृतपूजां समर्पयेत् – एतैत सर्पाः शिवकण्ठभूषा लोकोपकाराय भुवं वहन्तः। भूतैः समेता मणिभूषितांगाः गृह्णीत पूजां परमां नमो वः।1। कल्याणरूपं फणिराजमग्र्यं नानाफणामण्डलराजमानम्। भक्त्यैक गम्यं जनताशरण्यं यजाम्यहं नः स्वकुलाभिवृद्ध्यै।2। अनया पूजया अधिदेवताप्रत्यधिदेवतासहित राहुः प्रीयताम् न मम।।

ततः होमः कर्तव्यः। (पंचभूसंस्कारपूर्वकमग्निस्थापनं कृत्वा बलवर्धननामाग्निं संपूज्य कुशकंडिका आघाराज्यभागौ च हुत्वा अग्न्यर्चनपूर्वकवराहुतिं दत्त्वा आवाहितदेवतानां चतुर्थ्यन्तनाम्ना स्वाहान्तेन जुहुयात्। (तत्र षोडशमातृकानां 17आहुतयः, सप्तघृतमातृकानां 7आ, पंचॐकाराः 5आ, ग्रहहोम 9आ, ग्रहाणामधिदेवतानां 9आ, ग्रहाणां प्रत्यधिदेवतानां 9आ, क्षेत्रपालानां 51आ, नक्षत्राणां 28आ,

योगानां 27आ, पंचलोकपालानां 7आ, दशदिक्पालानां 10आ, इत्यादयः) । ततः प्रधानहोमः - राहोः वैदिकमंत्रेणाष्टोत्तरशतमाहुतिं हुत्वाधि देवतायाः प्रत्यधिदेवतायाश्चाहुतयो दत्त्वा कालस्य दशनामप्रकृतिकैः चतुर्थ्यन्तैः स्वाहाशिरस्कैः दश आहुतिं दत्त्वा '**ॐ ह्रीं तत्कारिणी विषहारिणी विषरूपिणी विषं हन इन्द्रस्य वज्रेण नमः स्वाहा**' इति मंत्रेणाष्टोत्तरशतं जुहुयात्। ततः सर्पनामभिः, सर्पगायत्र्या (यथाशक्ति), सर्पसूक्तेन च होमं कृत्वा ततो व्याहृतिहोमः, प्रायश्चित्तहोमः, स्विष्टकृच्च कुर्यात्। ततो घृतपात्रतिलपात्रयोर्दानम्, नागेभ्यः क्षीरबलिदानम्, आरार्तिक्यं, मंत्रपुष्पांजलिं च कृत्वा *प्रदक्षिणां* कुर्यात्-ण **ये तीर्थानि...। यानि कानि....। ॐ भूर्भुवःस्वः सपत्नीकनवनागदेवताभ्यो नमः, युष्मभ्यं प्रदक्षिणां समर्पयामि।** *नमस्कारः*- **नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु। येऽन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः। ॐ भूर्भुवःस्वः सपत्नीकनवनागदेवताभ्यो नमः, युष्मभ्यं नमस्कारान् समर्पयामि।** *क्षमायाचना*- **अपराधसहस्राणि क्रियन्तेऽहर्निशं मया। दासोऽयमिति मां मत्वा क्षम्यतां परमेश्वर।1। ज्ञानतोऽज्ञानतो वापि कृतसर्पवधो मया। पूर्वजन्मनि वाऽस्मिन् च तत्सर्वं क्षन्तुमर्हसि।2। मंत्रहीनं क्रियाहीनं भक्तिहीनमहीश्वर। यत्पूजितं मया देव परिपूर्णं तदस्तु मे।3। करचरणकृतं वाक्कायजं.....।4। आवाहनं न जानामि.....।5। यदक्षरं पदं भ्रष्टं ....।6। ॐ भूर्भुवःस्वः सपत्नीकनवनागदेवताभ्यो नमः, युष्मभ्यं क्षमायाचनापूर्वकं साष्टांगप्रणिपातं समर्पयामि।।** ततो देवताविसर्जनम्, अग्न्युद्वासश्चान्ते कृत्वा कर्मसंपूर्णतावाचनम् कुर्यात्। कलशजलेन प्रोक्षणं दक्षिणादानं चेत्याद्युत्तरतंत्रं (उत्तरांगभूतकर्म) कृत्वा शान्तिकर्मणा समापयेत्।। **कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वानुकृतस्वभावात्। करोमि यद्यत्सकलं परस्मै नारायणेति समर्पये तत्।1। प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत्। स्मरणादेव तद्विष्णो सम्पूर्णं स्यादिति श्रुतिः।2। यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु। न्यूनं संपूर्णतां याति सद्यो वन्दे तमच्युतम्।3।**

<u>विशेषसूचना</u> :- 1. पृष्ठ सं. 230 में नवनागवेदी के चित्र के अनुसार एक पीठ पर आटा आदि से वेदी को बनायें।

2. इस कालसर्पयोग शान्ति कर्म में प्रयुक्त समस्त तांबे और चांदि के नागों को ''सर्पप्रार्थना'' खण्ड में जो 11 मंत्र ऊपर लिखें है उनका उच्चारण करते हुए बहते पानी में प्रवाहित करें। नहाकर शुभ्रवस्त्र पहनें।

## 3.14 वेदव्यासमन्त्रप्रयोगविधिः –

फलम्– कवित्वसिद्धिः, ग्रन्थलेखनसिद्धिः, ज्ञानप्राप्तिश्च। अनुष्ठानम्–48 दिन में 125000। पुरश्चरण 14 लाख + दशांशादि।

"**ॐ जूं सः व्यां वेदव्यासाय नमः सः जूं ॐ**" – मूलमन्त्रः।

**अथास्य वेदव्यासमन्त्रस्य ब्रह्मा ऋषिः, अनुष्टुप्छन्दः, सत्यवतीसुतो देवता, व्यां बीजं, नमः शक्तिः, ॐ कीलकं, ममाभिष्टसिद्ध्यर्थे जपे विनियोगः।**

अथ ऋष्यादिन्यासः :–

**ॐ ब्रह्म ऋषये नमः** – शिरसि, **ॐ अनुष्टुप्छन्दसे नमः** – मुखे, **ॐ सत्यवतीसुतदेवतायै नमः** – हृदि, **ॐ व्यां बीजाय नमः** – गुह्ये, **ॐ नमः शक्तये नमः** – पादयोः, **ॐ ॐ कीलकाय नमः** – नाभौ, **ॐ ममाभिष्टसिद्ध्यर्थे जपे विनियोगाय नमः** – सर्वांगे।

अथ करादिन्यासः :–

| अथ बीजं | अथ हृदयादिन्यासः | अथ करन्यासः |
|---|---|---|
| **ॐ व्यां** | **हृदयाय नमः** | **अंगुष्ठाभ्यां नमः।** |
| **ॐ व्यीं** | **शिरसे स्वाहा** | **तर्जनीभ्यां नमः।** |
| **ॐ व्यूं** | **शिखायै वषट्** | **मध्यमाभ्यां नमः।** |
| **ॐ व्यैं** | **कवचाय हुम्** | **अनामिकाभ्यां नमः।** |
| **ॐ व्यौं** | **नेत्रत्रयाय वौषट्** | **कनिष्ठिकाभ्यां नमः।** |
| **ॐ व्यः** | **अस्त्राय फट्** | **करतलकरपृष्ठाभ्यां नमः।** |

<u>अथ ध्यानम्</u> :-

**व्याख्यामुद्रिकया लसत्करतलं सद्योगपीठस्थितं, वामे जानुतले दधानमपरं हस्तेषु विद्यानिधिं।**
**विप्रव्रातवृतं प्रसन्नमनसं पाथोरुहांगद्युतिं, पाराशर्यमतीव पुण्यचरितं व्यासं स्मरेत्सिद्धये।।**

(इति ध्यात्वा मानसोपचारैः संपूजयेत्। ततः सर्वतोभद्रमण्डले धर्मादिपीठदेवताः संस्थाप्य) -

"**ॐ धर्मादिपीठदेवताभ्यो नमः**" – (इत्यनेन मन्त्रेण पूजयेत् )।

(ततः यंत्रं पृ.सं. 238/मूर्तिं वा ताम्रपात्रोपरि निधाय घृतेनाभ्यंज्य दुग्धधारां जलधारां च दत्त्वा स्वच्छवस्त्रेण संशोध्य पुष्पाद्यासनं दत्त्वा पीठमध्ये संस्थाप्य प्रतिष्ठां कुर्यात्)

**'ॐ ह्रीं आं क्रों यं रं लं वं शं षं सं हं ह्रीं हंसः सोऽहं सोऽहं हंसः शिवः यन्त्रस्य प्राणा इह प्राणाः सन्तु। ॐ ह्रीं आं क्रों यं रं लं वं शं षं सं हं ह्रीं हंसः सोऽहं सोऽहं हंसः शिवः यन्त्रस्य जीव इह स्थितो भवतु। सर्वेन्द्रियाणि वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणाः इहैवागत्यासीरन् यन्त्रे सुखं चिरं च तिष्ठन्तु स्वाहा।'**

(इत्यनेन प्रकारेण प्रतिष्ठां कृत्वा पुनर्ध्यात्वा मूलेना आवाहनासनपाद्यार्घ्याचमनस्नानवस्त्राभूषणगन्धपुष्पान्तोपचारैः संपूज्य षट्कोणकेसरेषु आग्नेयादिचतुर्दिक्षु मध्ये दिक्षु चावरणपूजां कुर्यात्। ततः षडंगानि पूजयेत्)

**ॐ व्यां हृदयाय नमः, ॐ व्यीं शिरसे स्वाहा, ॐ व्यूं शिखायै वषट्, ॐ व्यैं कवचाय हुम्, ॐ व्यौं नेत्रत्रयाय वौषट्, ॐ व्यः अस्त्राय फट्।** ततः पुष्पांजलिमादाय मूलमुच्चार्य –

**'ॐ अभीष्टसिद्धिं मे देहि शरणागतवत्सल। भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनं।।'** (इति पठित्वा पुष्पांजलिं च दत्त्वा) **'पूजितास्तर्पिताः सन्तु'** – इति प्रथमावरणं ततोऽष्टदले पूज्यपूजकयोरन्तराले प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य दक्षिणावर्तेन प्राच्यादिचतुर्दिक्षु – **ॐ शल्याय नमः, शल्यश्रीपादुकां पूजयामि तर्पयामि नमः।1।**

**ॐ वैशम्पायनाय नमः, वैशम्पायनश्रीपादुकां पूजयामि तर्पयामि नमः ।2।**

**ॐ जैमिनये नमः, जैमिनिश्रीपादुकां पूजयामि तर्पयामि नमः ।3।**

**ॐ सुमन्ताय नमः, सुमन्तश्रीपादुकां पूजयामि तर्पयामि नमः ।4।** (ततः आग्नेयादिचतुष्कोणेषु)

**ॐ श्रीशुकाय नमः, शुकश्रीपादुकां पूजयामि तर्पयामि नमः ।5।**

**ॐ उग्रश्रवसे नमः, उग्रश्रवःश्रीपादुकां पूजयामि तर्पयामि नमः ।6।**

**ॐ समन्याय नमः, समन्यश्रीपादुकां पूजयामि तर्पयामि नमः ।7।**

**ॐ चिमनाय नमः, चिमनश्रीपादुकां पूजयामि तर्पयामि नमः ।8।**

पूजयित्वा पूर्ववत्पुष्पांजलिं दद्यात्, इति द्वितीयावरणं। ततो भूपुरे इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि च पूजयित्वा पुष्पांजलिं च दद्यात्। इत्यावरणपूजां कृत्वा धूपदीपनैवेद्याचमनताम्बूलस्तवपाठनीराजनपुष्पांजलिप्रदक्षिणानमस्कारान्तोपचारैः संपूज्य क्षमायाचनां च कृत्वा जपं कुर्यात्। तत्र धूपादिषु विशेषः -

धूपं - **वनस्पतिरसोद्भूतो गन्धाढ्यो गन्ध उत्तमः। आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यतां।**

**ॐ व्यां सांगाय सायुधाय सवाहनाय सपरिवाराय वेदव्यासाय धूपं समर्पयामि।**

दीपं - **स्वप्रकाशो महादीपः सर्वतस्तिमिरापहः। स बाह्याभ्यन्तरं ज्योतिर्दीपोऽयं प्रतिगृह्यतां।**

**ॐ व्यां सांगाय सायुधाय सवाहनाय सपरिवाराय वेदव्यासाय दीपं दर्शयामि।**

नैवेद्यं - **ॐ अमृतोपस्तरणमसि स्वाहा** - इत्यनेन जलं दत्त्वा प्राणाहुतीन् दद्यात् ततः

**ॐ व्यां वेदव्यासाय नमः अस्त्राय फट्** - इति मन्त्रेण प्रोक्षयित्वा

**ॐ जूं सः वौषट्** - इति 7 वारं जप्त्वा अर्थमननं च कृत्वा जलेन प्रोक्षयित्वा

**ॐ आं यं श्रौषट्** - इत्यनेन मन्त्रेण 7 वारमधोमुखवामहस्तेन तालिकां कृत्वा

**ॐ इं वं स्वाहा** – इत्यनेन मन्त्रेण धेनुमुद्रां प्रदर्शयित्वा मूलमन्त्रं 7 वारं जप्त्वाऽर्थमननं कुर्यात् ततः अर्घ्यादित्रयं दद्यात्

**ॐ अमृतपिधानमसि स्वाहा** – पुनः जलं दद्यात्।

**ॐ व्यां सांगाय सायुधाय सवाहनाय सपरिवाराय वेदव्यासाय नैवेद्यं निवेदयामि।**

कृतपूजाया साद्गुण्यार्थे दक्षिणामपि दद्यात्। **हरिः ॐ तत्सत् । ब्रह्मार्पणमस्तु।**

**अत्र ध्येयं** :- अस्य पुरश्चरण वाऽष्टसहस्रं वा जपः कृत्वा पायसान्नेन दशांशतो होमः। एवं कृते मन्त्रः सिद्धो भवति। सिद्धे च मन्त्रे मन्त्री प्रयोगान्साधयेत्। तथाहि –

**' जपेदष्टसहस्राणि पायसैर्होममाचरेत् । एवं सिद्धमनुर्मन्त्री कवित्वं शोभनाः प्रजाः।।**
**व्याख्यानशक्तिं कीर्तिं च लभते संपदां च यः। मृत्युंजयेन पुटितं यो व्यासस्य मनुं जपेत्।।**
**सर्वोपद्रवसंत्यक्तो लभते वांछितं फलं । मृत्युंजयस्य मन्त्रोऽयं त्रिवर्णो मृत्युनाशनः।।**
**जप्तोऽयं केवलो नृणामिष्टसिद्धिं प्रयच्छति । किं पुनस्तेन पुटितो वेदव्यासमनूत्तमः।।'** इत्यों शम् ।।

## 3.15 माहेश्वरसूत्रानुष्ठानविधिः –

फलम्– व्याकरणज्ञान से ब्रह्मज्ञानपर्यन्तसर्वज्ञानप्राप्तिः, मोक्षश्च।

अनुष्ठानम्– प्रतिदिन चतुर्दशसूत्रों का 11 आवृत्ति (न्यूनतम) से शिवाभिषेक 48 दिन। यावत्फलप्राप्तिरनुष्ठानस्यावृत्तिः कर्तव्या।

संकल्पं च कृत्वा हस्ते पुष्पाक्षतजलं गृहीत्वा) –

**ॐ श्री अक्षरसमाम्नायस्य पाणिनि ऋषिः। परब्रह्मसदाशिवो देवता। अनुष्टुप्छन्दः। ऐं बीजं। ह्रीं शक्तिः। क्लीं कीलकम्। सर्वाभीष्टसिद्ध्यर्थेऽभिषेककर्मणि विनियोगः**।। (जलं विसृज्यताम् , ततो न्यासं कुर्यात्)

अथ ऋष्यादि न्यासः –

**ॐ श्री अक्षरसमाम्नायस्य पाणिनि ऋषये नमः** – शिरसि। **ॐ श्री अनुष्टुप्छन्दसे नमः** – मुखे। **ॐ श्री परब्रह्मसदाशिवदेवतायै नमः** –हृदये। **ॐ ऐं बीजाय नमः** –गुह्ये। **ॐ ह्रीं शक्तये नमः** –पादयोः। **ॐ क्लीं कीलकाय नमः** –नाभौ। **ॐ श्रीपरब्रह्मसदाशिवप्रीत्यर्थेऽभिषेककर्मणि विनियोगाय नमः** –सर्वांगे।।

अथ हृदयादिन्यासः

| मन्त्राः | | अथ अंग न्यासः – | | अथ कर न्यासः |
|---|---|---|---|---|
| **अइउण् ऋलृक्** | – | **हृदये नमः।** | – | **अंगुष्ठाभ्यां नमः ।** |
| **एओङ् ऐऔच्** | – | **शिरसे स्वाहा।** | – | **तर्जनीभ्यां नमः ।** |
| **हयवरट् लण्** | – | **शिखायै वषट्।** | – | **मध्यमाभ्यां नमः ।** |
| **ञम -- धष्** | – | **कवचाय हुम् ।** | – | **अनामिकाभ्यां नमः।** |
| **जब -- कपय्** | – | **नेत्रत्रयाय वौषट्।** | – | **कनिष्ठिकाभ्यां नमः।** |
| **शषसर् हल्** | – | **अस्त्राय फट्।** | – | **करतलकरपृष्ठाभ्यां नमः।** |

(पुनः जलं गृहीत्वा) – **श्रीसदाशिवप्रीत्यर्थेऽभिषेककर्मणि विनियोगः**।। (जलं विसृज्यताम्, ततः)

**ॐ भूर्भुवःस्वरोमिति दिग्बन्धः**।।

(इत्युक्त्वा दक्षिणहस्तस्य तर्जनीमध्यमाभ्यां वामहस्ते ताडनं कुर्यात्) (इति न्यासं कृत्वा) – **'वृद्धिरादैच्'** – (इति सूत्रं त्रिरुच्चारयन् एकैकशः त्रीन् बिल्वपत्रान् शिवोपरि स्थापयित्वा अक्षरसमाम्नायेन यथाशक्तिः, न्यूनतमसंख्या चेदेकादशवारं) **शिवाभिषेकं** (कुर्यात्।। अन्ते च पुनः –) **'वृद्धिरादैच्'** (– इति सूत्रं त्रिरुच्चारयन् एकैकशः त्रीन् बिल्वपत्रान् शिवोपरि स्थापयित्वा जलेन शिवार्पणं कुर्यात्)।।

## 3.16 चाक्षुषोपनिषद् प्रयोगविधिः

फलम्- चक्षुः सम्बन्धी सर्वरोग निवृत्तिः। अनुष्ठानम्- 48 दिन में 6000। यावत्फलप्राप्तिरावृत्तिः कर्तव्या।

दाहिने हाथ में जल लेकर सबसे पहले विनियोगः- **ॐ अस्याश्चाक्षुषीविद्याया अहिर्बुध्न्य ऋषिः, गायत्री छंदः, सूर्यो देवता, ॐ बीजम्, ह्रीं शक्तिः, हंसः कीलकम्, चक्षूरोगनिवृत्तये विनियोगः।**

अथ ऋष्यादि न्यासः-

**ॐ अस्याश्चाक्षुषीविद्याया अहिर्बुध्न्य ऋषये नमः** - शिरसि, **ॐ गायत्रीछन्दसे नमः** - मुखे, **ॐ सूर्यदेवतायै नमः** - हृदये, **ॐ ॐ बीजाय नमः** - गुह्ये, **ॐ ह्रीं शक्तये नमः, ॐ हंसः कीलकाय नमः** - नाभौ, **ॐ चक्षूरोगनिवृत्तये विनियोगाय नमः** - सर्वाङ्गे।

अथ हृदयादिन्यासः :-

| अथ बीजं | अथ हृदयादिन्यासः | अथ करन्यासः |
|---|---|---|
| **ॐ ॐ नमः** | **हृदयाय नमः** | **अंगुष्ठाभ्यां नमः।** |
| **ॐ ह्रीं नमः** | **शिरसे स्वाहा** | **तर्जनीभ्यां नमः।** |
| **ॐ हंसाय नमः** | **शिखायै वषट्** | **मध्यमाभ्यां नमः।** |
| **ॐ ॐ नमः** | **कवचाय हुम्** | **अनामिकाभ्यां नमः।** |
| **ॐ ह्रीं नमः** | **नेत्रत्रयाय वौषट्** | **कनिष्ठिकाभ्यां नमः।** |
| **ॐ हंसाय नमः** | **अस्त्राय फट्** | **करतलकरपृष्ठाभ्यां नमः।** |

।।ॐ भूर्भुवःस्वरोमिति दिग्बन्धः।।

**ॐ चक्षुः चक्षुः चक्षुः तेजः स्थिरो भव। मां पाहि पाहि। त्वरितं चक्षूरोगान् शमय शमय। मम जातरूपं तेजो दर्शय दर्शय। यथा अहमन्धो न स्यां तथा कल्पय कल्पय। कल्याणं कुरु-कुरु। यानि मम पूर्वजन्मोपार्जितानि चक्षुःप्रतिरोधक दुष्कृतानि सर्वाणि निर्मूलय निर्मूलय। ॐ नमः चक्षुस्तेजोदात्रे दिव्याय भास्कराय। ॐ नमः ★करुणाकराय अमृताय। ॐ नमः सूर्याय। ॐ नमो भगवते सूर्याय अक्षितेजसे नमः। खेचराय नमः। महते नमः। रजसे नमः। तमसे नमः। असतो मा सद्गमय। तमसो मा ज्योतिर्गमय। मृत्योर्मा अमृतं गमय। उष्णो भगवान् शुचिरूपः। हंसो भगवान् शुचिर प्रतिरूपः। य इमां ★★चाक्षुष्मतिविद्यां ब्राह्मणो नित्यमधीते, न तस्याक्षिरोगो भवति। न तस्य कुले अन्धो भवति। अष्टौ ब्राह्मणान्सम्यग् ग्राहयित्वा विद्या सिद्धिर्भवति। ॐ नमो भगवते आदित्याय अहोवाहिनी अहोवाहिनी स्वाहा। ॐ विश्वरूपिणं घृणिनं जातवेदसं हिरण्मयं पुरुषं ज्योतीरूपं। तपन्तं सहस्ररश्मिः शतधा वर्तमानः पुरः प्रजानामुदयत्येष सूर्यः।।**

पाठभेदः – ★ कल्याणकराय । ★★ चाक्षुष्मतीं।

विधिः –

1. कलशस्थापना करके उस पर अनार की शाखा की कलम से हल्दी के घोल से निम्न बत्तीसी यन्त्र को कांसे के थाली पर लिखें।
2. उक्त यन्त्र पर तांबे की कटोरी में चतुर्मुखी बत्ती का दीपक जलाकर गन्धाक्षतपुष्पादि से पूजा करें।
3. पूर्वाभिमुख बैठकर हल्दी के गांठ की माला से 1 माला निम्न मन्त्र का जप करें –

   '**ॐ मम** (यजमानस्य वा) **चक्षूरोगाञ्शमय शमय**।'
4. तत्पश्चात् निम्न बीज मन्त्र का 6 माला जप करें – '**ॐ ह्रीं हंसः**।'
5. अब चाक्षुषोपनिषद् का कम से कम 12 बार पाठ करें। अथवा 48 दिन के अनुष्ठान के अनुसार नित्य 125 पाठ करें।

6. अब पुनः उक्त बीज मन्त्र का 6 माला जप करें।

7. पाठ करने के उपरान्त सूर्यदेवता को गंध से युक्त जल से अर्घ्य दें और उसे कलशस्थ जल में मिलाके जल को आँखों पर लगाना चाहिए।

बत्तीसी यन्त्र-

| | | | |
|---|---|---|---|
| 8 | 15 | 2 | 7 |
| 6 | 3 | 12 | 11 |
| 14 | 9 | 8 | 1 |
| 4 | 5 | 10 | 13 |

सूर्यगायत्रीमन्त्रः ॐ आदित्याय विद्महे सहस्रकिरणाय धीमहि। तन्नो भानुः प्रचोदयात्।।

अथवा ॐ ह्रीं घृणिः सूर्याय आदित्याय श्रीं ॐ।

अथवा ॐ मम नेत्रज्योती जागर जागर ॐ शान्तिः।

अथवा ( ऋग्वेद 10.158)

चक्षुर्नो देवः सविता चक्षुर्न उत पर्वतः। चक्षुर्धाता दधातु नः।

चक्षुर्नो देहि चक्षुषे। चक्षुर्विरूपे तनूच्यः। संचेदं विच पश्येम।। ।।हरिः ॐ तत्सत्।।

## 3.17 बवासीर का मंत्र

फलम्- सब प्रकार के गुदा सम्बन्धी रोग, विशेषत: सब प्रकार के बवासीर रोग की निवृत्तिः। अनुष्ठानम्- यावत्फलप्राप्तिः।

**"आकोल आकोल आकरेता, जो न आवे आकरेता, जाके रहे न गुदा रेशा। इरंची विरंची यह मंत्र जपत जाय, शौच करत जाय, खूनी बादी दोनों जाय। इतने पर भी न जाय तो अगस्त मुनि ब्राह्मणो न भवति।"**

विशेष सूचना :-

शौच करते समय गुदा में अंगुली डालकर घुमाते हुए उपरोक्त मंत्र पढता जाय, केवल एक बार। शौच जाते समय में सात बार मानस जप करें।

## 3.18 वैदिकगायत्रीमंत्राः

फलम्- जिस गायत्री का जो देवता है उस देवता की कृपा से उस देवता के अधिकारान्तर्गत फल मिलेगा। अनुष्ठान् विधि:- सर्वसाधारण गायन्त्रीमन्त्र के समान। श्रीगायत्रीयन्त्र (पृष्ठ संख्या 438, चित्र संख्या 9) में गायत्री देवता का स्थापना आदि करें। तत्पश्चात्-

गणेशगायत्री :- **तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि। तन्नो दन्तिः प्रचोदयात्।** अथवा
**एकदन्ताय विद्महे वक्रतुण्डाय धीमहि। तन्नो दन्ती प्रचोदयात्।1।**

रुद्रगायत्री :- **पुरुषस्य विद्महे सहस्राक्षस्य महादेवस्य धीमहि। तन्नो रुद्रः प्रचोदयात्।** अथवा
**तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयात्।2।**

नन्दिगायत्री :- **तत्पुरुषाय विद्महे चक्रतुण्डाय धीमहि। तन्नो नन्दिः प्रचोदयात्।3।**

कार्तिकेयगायत्री :- **तत्पुरुषाय विद्महे महासेनाय धीमहि। तन्नः षण्मुखः प्रचोदयात्।4।**

सावित्री गायत्री :- **ॐ भूः ॐ भुवः ॐ सुवः ॐ महः ॐ जनः ॐ तपः ॐ सत्यम्।**

ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्।
ओमापो ज्योती रसोऽमृतं ब्रह्म भूर्भुवःस्वरोम्।5।

सूर्यगायत्री :- आदित्याय विद्महे सहस्रकिरणाय धीमहि। तन्नः सूर्यः प्रचोदयात्। अथवा
भास्कराय विद्महे महद्द्युतिकराय धीमहि। तन्न आदित्यः प्रचोदयात्।6।

लक्ष्मीगायत्री :- महालक्ष्मीश्च विद्महे सर्वसिद्धिश्च धीमहि। तन्नो देवी प्रचोदयात्। अथवा
ॐ भूर्लक्ष्मी भुवर्लक्ष्मीः स्वर्लक्ष्मीः कालकर्णी तन्नो महालक्ष्मीः प्रचोदयात्।7।

विष्णुगायत्री :- नारायणाय विद्महे वासुदेवाय धीमहि। तन्नो विष्णुः प्रचोदयात्।8।

गरुडगायत्री :- तत्पुरुषाय विद्महे सुवर्णपक्षाय धीमहि। तन्नो गरुडः प्रचोदयात्।9।

नरसिंहगायत्री :- वज्रनखाय विद्महे तीक्ष्णदंष्ट्राय धीमहि। तन्नो नरसिंहः प्रचोदयात्। अथवा
नृसिंहाय विद्महे वज्रनखाय धीमहि। तन्नः सिंहः प्रचोदयात्।10।

ब्रह्मगायत्री :- वेदात्मनाय विद्महे हिरण्यगर्भाय धीमहि। तन्नो ब्रह्म प्रचोदयात्।11।

अग्निगायत्री :- वैश्वानराय विद्महे लालीलाय धीमहि। तन्नो अग्निः प्रचोदयात्।12।

दुर्गागायत्री :- कात्यायनी च विद्महे कन्याकुमारि च धीमहि। तन्नो दुर्गिः प्रचोदयात्।13।

शक्ति गायत्री :- सर्वसम्मोहिन्यै विद्महे विश्वजनन्यै धीमहि। तन्नः शक्तिः प्रचोदयात्।।14।।

सरस्वती गायत्री :- वाग्देव्यै च विद्महे कामराज्ञ्यै च धीमहि। तन्नो देवी प्रचोदयात्।।15।।

राम गायत्री :- दाशरथाय विद्महे सीतावल्लभाय धीमहि। तन्नो रामः प्रचोदयात्।।16।

गोपाल गायत्री :- कृष्णाय च विद्महे दामोदराय च धीमहि। तन्नो विष्णुः प्रचोदयात्।।17।। ।। हरिः ॐ तत्सत्।।

## 3.19 हंसगायत्री (केवल संन्यासियों केलिये)

फलम्- ब्रह्मज्ञान प्राप्तिपूर्वक मोक्षः। अनुष्ठान- नित्य न्यूनतम ग्यारह (11) माला।

**अस्य श्री हंसगायत्रीमन्त्रस्याव्यक्तपरब्रह्म ऋषिः, अव्यक्तगायत्री छन्दः, परमहंसो देवता, हं सां बीजं, हं सों शक्तिः, हं सूं कीलकम्, परमहंसप्रसादसिद्ध्यर्थे जपे विनियोगः।**

अथ ऋष्यादिन्यासः -

**ॐ श्री अव्यक्तपरब्रह्मर्षये नमः** - शिरसि, **ॐ अव्यक्तगायत्रीछन्दसे नमः** - मुखे, **ॐ परमहंसदेवतायै नमः** - हृदये, **ॐ हं सां बीजाय नमः** - गुह्ये, **ॐ हं सों शक्तये नमः** - पादयोः, **ॐ हं सूं कीलकाय नमः** - नाभौ, **ॐ परमहंसप्रसादसिद्ध्यर्थे जपे विनियोगाय नमः** - सर्वाङ्गे।

अथ हृदयादिन्यासः -

| मन्त्राः | हृदयादिन्यासः | करन्यासः |
|---|---|---|
| **ॐ हं सां** | **हृदयाय नमः** | **अंगुष्ठाभ्यां नमः** |
| **ॐ हं सीं** | **शिरसे स्वाहा** | **तर्जनीभ्यां नमः** |
| **ॐ हं सूं** | **शिखायै वषट्** | **मध्यमाभ्यां नमः** |
| **ॐ हं सैं** | **कवचाय हुम्** | **अनामिकाभ्यां नमः** |
| **ॐ हं सौं** | **नेत्रत्रयाय वौषट्** | **कनिष्ठिकाभ्यां नमः** |
| **ॐ हं सः** | **अस्त्राय फट्** | **करतलकरपृष्ठाभ्यां नमः।** |

**ॐभूर्भुवःस्वरोमिति दिग्बन्धः।**

अथ ध्यानम् -

**गमागमस्थं गमनादिशून्यं चिद्रूपदीपं तिमिरापहारम्। पश्यामि ते सर्वजनान्तरस्थं नमामि हंसं परमात्मरूपम्।।**

**देहो देवालयः प्रोक्तो जीवो देवः सनातनः। त्यजेदज्ञाननिर्माल्यम् सोऽहंभावेन पूजयेत्।।**

अथ हंसगायत्रीमन्त्रः -

**ॐ हंस हंसाय विद्महे परमहंसाय धीमहि। तन्नो हंसः प्रचोदयात्।।**

## 3.20 शुकरहस्योपनिषदि महावाक्यजपविधिः (केवल संन्यासियों केलिये)

फलम्- सद्योमुक्तिः। अनुष्ठान- नित्य प्रत्येकश्वास के साथ अथवा न्यूनतम 21 माला।

**'ॐ अहं ब्रह्मास्मि' इत्यस्य श्रीमहावाक्यमहामंत्रस्य हंस ऋषिः, अव्यक्तगायत्री छन्दः, परमहंसो देवता, हं बीजम्, सः शक्तिः, सोऽहं कीलकम्, मम परमहंसप्रीत्यर्थे महावाक्यजपे विनियोगः।**

अथ ऋष्यादिन्यासः :-

**ॐ अहं ब्रह्मास्मि' इत्यस्य श्रीमहावाक्यमहामंत्रस्य हंसर्षये नमः** - शिरसि, **अव्यक्तगायत्रीछन्दसे नमः** - मुखे, **परमहंसदेवतायै नमः** - हृदि, **हं बीजाय नमः** - गुह्ये, **सः शक्तये नमः** - पादयोः, **सोऽहं कीलकाय नमः** - नाभौ, **मम परमहंसप्रीत्यर्थे महावाक्यजपे विनियोगाय नमः** - सर्वांगे।

अथ करादिषडंगन्यासः :-

| अथ मन्त्राः | अथ हृदयादिन्यासः | अथ करन्यासः |
|---|---|---|
| **ॐ सत्यं ज्ञानमनन्तं ब्रह्मेति** | **हृदयाय नमः** | **अंगुष्ठाभ्यां नमः** |
| **ॐ नित्यानन्दो ब्रह्मेति** | **शिरसे स्वाहा** | **तर्जनीभ्यां स्वाहा** |

| | | |
|---|---|---|
| ॐ नित्यानन्दमयो ब्रह्मेति | शिखायै वषट् | मध्यमाभ्यां वषट् |
| ॐ यो वै भूमेति | कवचाय हुम् | अनामिकाभ्यां हुम् |
| ॐ यो वै भूमाधिपतिरिति | नेत्रत्रयाय वौषट् | कनिष्ठिकाभ्यां वौषट् |
| ॐ एकमेवाद्वितीयं ब्रह्मेति | अस्त्राय फट्। | करतलकरपृष्ठाभ्यां फट् |

ॐ भूर्भुवःसुवरोमिति दिग्बन्धः।

अथ ध्यानम्: नित्यानन्दं परमसुखदं केवलं ज्ञानमूर्तिं, *विश्वातीतं गगनसदृशं तत्त्वमस्यादिलक्ष्यम्।
एकं नित्यं विमलमचलं सर्वधीसाक्षिभूतं, भावातीतं त्रिगुणरहितं सद्गुरुं तं नमामि।।

* द्वन्द्वातीतं - इति पाठभेदः

ततः यथाशक्ति महावाक्यस्य जपं कुर्यात्। ततः तेजोबिन्दूपनिषत्स्थमिदं स्तोत्रं पठेत् :-

अहं ब्रह्मास्मि मंत्रोऽयं दृश्यपापं विनाशयेत्। अहं ब्रह्मास्मि मन्त्रोऽयमन्यमंत्रं विनाशयेत्।।1।।
अहं ब्रह्मास्मि मन्त्रोऽयं देहदोषं विनाशयेत्। अहं ब्रह्मास्मि मन्त्रोऽयं जन्मपापं विनाशयेत्।।2।।
अहं ब्रह्मास्मि मन्त्रोऽयं मृत्युपाशं विनाशयेत्। अहं ब्रह्मास्मि मन्त्रोऽयं द्वैतदुःखं विनाशयेत्।।3।।
अहं ब्रह्मास्मि मन्त्रोऽयं भेदबुद्धिं विनाशयेत्। अहं ब्रह्मास्मि मन्त्रोऽयं चिंतादुःखं विनाशयेत्।।4।।
अहं ब्रह्मास्मि मन्त्रोऽयं बुद्धिव्याधिं विनाशयेत्। अहं ब्रह्मास्मि मन्त्रोऽयं चित्तबंधं विनाशयेत्।।5।।
अहं ब्रह्मास्मि मन्त्रोऽयं कामादीन्नाशयेत्क्षणात्। अहं ब्रह्मास्मि मन्त्रोऽयं सर्वशोकं विनाशयेत्।।6।।
अहं ब्रह्मास्मि मन्त्रोऽयं सर्वव्याधीन्विनाशयेत्। अहं ब्रह्मास्मि मन्त्रोऽयं क्रोधशक्तिं विनाशयेत्।।7।।
अहं ब्रह्मास्मि मन्त्रोऽयं चित्तवृत्तिं विनाशयेत्। अहं ब्रह्मास्मि मन्त्रोऽयं संकल्पादीन्विनाशयेत्।।8।।

अहं ब्रह्मास्मि मन्त्रोऽयं कोटिदोषं विनाशयेत्।
अहं ब्रह्मास्मि मन्त्रोऽयमात्माज्ञानं विनाशयेत्।
अहं ब्रह्मास्मि मन्त्रोऽयमप्रतर्क्यसुखप्रदः ।
अहं ब्रह्मास्मि मन्त्रोऽयं ज्ञानानन्दं प्रयच्छति ।
अहं ब्रह्मास्मि मन्त्रोऽयमनात्माख्यासुरान्हरेत् ।
अहं ब्रह्मास्मि मन्त्रोऽयमनात्मासुरमर्दनः ।
सर्वमंत्रान्समुत्सृज्य एतं मंत्रं समभ्यसेत् ।

अहं ब्रह्मास्मि मन्त्रोऽयं सर्वतंत्रं विनाशयेत्।।9।।
अहं ब्रह्मास्मि मन्त्रोऽयं सर्वांस्तान्मोक्षयिष्यति ।।10।।
अहं ब्रह्मास्मि मन्त्रोऽयमात्मलोकजयप्रदः।।11।।
अहं ब्रह्मास्मि मन्त्रोऽयमजडत्वं प्रयच्छति।।12।।
अहं ब्रह्मास्मि मन्त्रोऽयमनात्माख्यगिरीन्हरेत्।।13।।
सप्तकोटिमहामंत्रं जन्मकोटिशतप्रदं ।।14।।
सद्यो मोक्षमवाप्नोति नात्र संदेहमण्वपि ।।15।।

अन्ते चेत्थं समर्पयेत् :- ज्ञानवैराग्यसिद्धिपूर्वकं मुक्त्यर्थं ब्रह्मार्पणमस्तु। हरिः ॐ तत्सत्।।

## 3.21 ॐकारस्य रहस्यं मननार्थमुपासनार्थं वा -

फलम्- संल्पानुसारेण सर्वफलदायकम्। अनुष्ठानम्- आसुप्तेरामृतेः कालम्।

| क्रमांक | तत्त्व | सगुणसाकार स्थूल | सगुणसाकार सूक्ष्म | सगुणनिराकार | निर्गुणनिराकार |
|---|---|---|---|---|---|
| 1 | मात्रा | अकार | उकार | मकार | ॐ |
| 2 | व्यष्टि | विश्व | तैजस | प्राज्ञ | तुरीय |
| 3 | समष्टि | विराट् /वैश्वानर | हिरण्यगर्भ | ईश्वर | ब्रह्म |
| 4 | शरीर | स्थूल | सूक्ष्म | कारण | अपूर्वमनपरम् |
| 5 | अवस्था | जाग्रत् | स्वप्न | सुषुप्ति | तुरीय |

| | | | | | |
|---|---|---|---|---|---|
| 6 | गुण | तमः | रजः | सत्त्व | गुणातीत |
| 7 | कार्य | सृष्टि | स्थिति | प्रलय | अकार्य |
| 8 | ऋषिः | अग्नि | सूर्य | वायु | सप्तर्षि |
| 9 | वेद | ऋक् | यजुः | साम | वेदातीत |
| 10 | देव | ब्रह्मा | विष्णु / सोम | महेश | देवातीत |
| 11 | स्थान | भूः | भुवः | स्वः | लोकातीत |
| 12 | भोग | स्थूलभुक् | सूक्ष्मभुक् | आनन्दभुक् | आनन्दरूप |
| 13 | लोक | पृथिवी | द्यौ | वायु | आकाश |
| 14 | कालः | वर्तमान | भूत | भविष्यत् | कालातीत |
| 15 | अधिज्यौतिष | अग्नि | आदित्य | विद्युत | जल |
| 16 | अधिविद्य | आचार्य | शिष्य | प्रवचन | विद्या |
| 17 | अधिप्रजं | माता | पिता | प्रजनन | प्रजा |
| 18 | अध्यात्म | अधराहनुः | उत्तराहनुः | जिह्वा | वाक् |
| 19 | अधिप्राण | प्राण | अपान | व्यान | अन |
| 20 | ज्ञान | अल्पज्ञ | अन्तर्यामि | सर्वज्ञ | पूर्णज्ञ |
| 21 | प्रज्ञा | बहिष्प्रज्ञ | अन्तःप्रज्ञ | अप्रज्ञ | पूर्णप्रज्ञ |
| 22 | अंग | सप्तांग | सप्तांग | एकीभूत | अंगातीत |

| | | | | | |
|---|---|---|---|---|---|
| 23 | मुख | 21 | 21 | चेतोमुख | चिद्रूप |
| 24 | स्वरूप | विषयमय | वासनामय | आनन्दमय | चिन्मय |
| 25 | शब्द | वैखरी | मध्यमा | पश्यन्ती | परा |
| 26 | ध्वनि | कला | बिन्दु | नाद | त्रयातीत |
| 27 | वैष्णव | अनिरुद्ध | प्रद्युम्न | संकर्षण | वासुदेव |
| 28 | शैव | ईश्वर | सदाशिव | साम्बशिव | परमशिव |

अथवा -

| क्रमांक | त्रिकनाम | प्रथम | द्वितीय | तृतीय |
|---|---|---|---|---|
| 1 | आद्या ॐ | अ | उ | म् |
| 1 | आद्या देवी | अ | क | थ |
| 2 | मण्डल | अग्नि | सूर्य | चन्द्र |
| 3 | लिंग | स्वयंभू | बाण | इतर |
| 3 | लिंग | पुरुष | स्त्री | नपुंसक |
| 4 | प्रभा | श्वेत | रक्त | मिश्र |
| 5 | पद | युष्मद् | अस्मद् | तत् |
| 6 | काल | वर्तमान | भूत | भविष्यत् |
| 7 | लोक | भूः | भुवः | स्वः |

| | | | | |
|---|---|---|---|---|
| 8 | निगम (वेद) | ऋक् | यजुः | साम |
| 9 | अवस्था | बाल्य | युवा | वार्धक्य |
| 9 | अवस्था | सुप्त | मूर्छित | समाधि |
| 9 | अवस्था | जाग्रत् | स्वप्न | सुषुप्ति |
| 10 | देव | ब्रह्मा | विष्णु | रुद्र |
| 11 | शक्ति | इच्छा | ज्ञान | क्रिया |
| 12 | पीठ | जालन्धर | काम | उड्डीयान |
| 13 | शरीर | स्थूल | सूक्ष्म | कारण |
| 14 | समष्टि | विराट् | हिरण्यगर्भ | ईश्वर |
| 15 | व्यष्टि | विश्व | तैजस | प्राज्ञ |
| 16 | कर्मसाधनं | काय | वाक् | मनः |
| 17 | आनन्द | विषय | वासना | ब्रह्म |
| 18 | कर्मफल | सामान्य | मध्यम | उत्कृष्ट |
| 19 | कर्म शाक्तमते | पुण्य | पाप | मिश्र |
| 19 | कर्म सर्वमते | संचित | प्रारब्ध | आगामी |
| 20 | प्रारब्धकर्म | स्वेच्छाकृत | परेच्छाकृत | अनिच्छाकृत |
| 21 | ज्ञानप्रतिबन्ध | संशय | भ्रम | असंभावना |

| | | | | |
|---|---|---|---|---|
| 22 | पुनस्प्रतिबन्ध | भूत | वर्तमान | भावी |
| 23 | सम्बन्ध | विषयविषयी | कार्यकारण | आधाराधेय |
| 24 | कारणवाद | आरम्भ | परिणाम | विवर्त |
| 25 | दुःख | आध्यात्मिक | आधिभौतिक | आधिदैविक |
| 26 | गुण | तमः | रजः | सत्त्वं |
| 27 | वासना | शरीर | लोक | शास्त्र |
| 28 | प्रपंच | स्थूल | सूक्ष्म | कारण |
| 29 | ज्ञानसाधन | श्रवण | मनन | निदिध्यासन |
| 30 | यौगिक बन्ध | मूल | उड्डीयान | जालन्धर |
| 31 | प्राणायाम | रेचक | पूरक | कुम्भक |
| 32 | वैराग्यकारणं | दोषदृष्टि | जिहासा | अदीनता |
| 33 | ज्ञानकारणं | वैराग्य | उपरम | श्रद्धा |
| 34 | अहंकार | कर्मज | भ्रान्तिज | सहज |
| 35 | अहंतादात्म्य | शरीर | चिच्छाया | साक्षी |
| 36 | एषणा | पुत्र | वित्त | लोक |
| 37 | आत्मा शैवमते | ज्ञानात्मा | महानात्मा | शान्तात्मा |
| 38 | स्वर्गस्थ तापाः | क्षय | अतिशय | साहसपतन |

| | | | | |
|---|---|---|---|---|
| 39 | शब्दवृत्ति | अभिधा | लक्षणा | व्यंजना |
| 40 | लक्षणा | जहत् | अजहत् | भागत्याग |
| 41 | सत्ता | व्यावहारिक | प्रातिभासिक | पारमार्थिक |
| 42 | परिच्छेद | वस्तु | देश | काल |
| 43 | भेद | सजातीय | विजातीय | स्वगत |
| 44 | ध्वनि | कला | बिन्दु | नाद |
| 45 | मंगलाचरण | नमस्कार | वस्तुनिर्देश | आशीर्वाद |
| 46 | अर्थवाद | गुणवाद | अनुवाद | भूतार्थवाद |
| 47 | विधि: | अपूर्व | नियम | परिसंख्या |
| 48 | अग्नि | दक्षिण | गार्हपत्य | आहवनीय |
| 49 | जीव | अवच्छेद | प्रतिबिम्ब | आभास |
| 50 | काण्ड | कर्म | भक्ति | ज्ञान |
| 51 | दोष | मल | विक्षेप | आवरण |
| 52 | योग | कर्म | भक्ति | ज्ञान |
| 53 | स्नान | जल | व्रत | मन्त्र |
| 54 | मार्ग | अधोगति | दक्षिणायन | उत्तरायण |
| 55 | पुण्यकर्म | इष्ट | पूर्त | दत्त |
| 56 | जप | वैखरी | उपांशु | मानस |

।। हरिॐ तत्सत् ।।

## 3.22 श्रीमहाभैरवमन्त्रानुष्ठानम्

फलम्- सर्वभयनिवृत्तिः, भूतप्रेतपिशाचादिबाधानिवृत्तिश्च। अनुष्ठानम्- 48 दिन में 51000 हजार (पुरश्चरण-28 लाख+दशांशादि।) श्रीभैरवयन्त्र (पृष्ठ संख्या 439, चित्र संख्या 13 अथवा 14) को स्थापित कर आवाहानादि कर्म कर लें। तत्पश्चात्-

**श्री भैरव गायत्री मन्त्रः-**

**ॐ कालकालाय विद्महे कालातीताय धीमहि। तन्नः कालः प्रचोदयात्।।** एवं

**श्री महाकालभैरव मन्त्रः -**

अथ विनियोगः -

**ॐ अस्य श्रीमहाकालभैरवमन्त्रस्य सदाशिव ऋषिः, मधुमती छन्दः, महाकालो देवता, ॐ बीजं, ह्रीं शक्तिः, क्रों कीलकम्, सशत्रुसर्वानिष्टनिवृत्तये विनियोगः।**

अथ ऋष्यादिन्यासः -

**ॐ अस्य श्रीमहाकालभैरवमन्त्रस्य सदाशिवर्षये नमः** - शिरसि, **मधुमतीछन्दसे नमः** - मुखे, **महाकालदेवतायै नमः** - हृदये, **ॐ ॐ बीजाय नमः** - गुह्ये, **ॐ ह्रीं शक्तये नमः** - पादयोः, **ॐ क्रों कीलकाय नमः** - नाभौ, **ॐसशत्रुसर्वानिष्ट-निवृत्तये विनियोगाय नमः** - सर्वाङ्गे।

अथ करादिन्यास: -

| अथ मन्त्रा: | अथ हृदयादिन्यास: | अथ करन्यास: |
| --- | --- | --- |
| **ॐ ॐ नम:** | **हृदयाय नम:,** | **अंगुष्ठाभ्यां नम:,** |
| **ॐ ह्रीं नम:** | **शिरसे स्वाहा,** | **तर्जनीभ्यां नम:,** |
| **ॐ क्रों नम:** | **शिखायै वषट्,** | **मध्यमाभ्यां नम:,** |
| **ॐ ॐ नम:** | **कवचाय हुम्,** | **अनामिकाभ्यां नम:** |
| **ॐ ह्रीं नम:** | **नेत्रत्रयाय वौषट्,** | **कनिष्ठिकाभ्यां नम:,** |
| **ॐ क्रों नम:** | **अस्त्राय फट्,** | **करतलकरपृष्ठाभ्यां नम:** |

**।। ॐ भूर्भुव:स्वरोमिति दिग्बन्ध:।।**

अथ मन्त्र: - (मधुमती छन्द का उच्चारण 3, 4 पर तोड़/रुक कर करें। जगण, सगण और गुरु।)

**ॐ हूं खौं, जं रं लं बं; क्रों ऐं ह्रीं, महाकाल। भैरव, सर्वविघ्न; नाशय, ह्रीं फट् स्वाहा।।**

## 3.23 श्रीमद्भगवद्गीता से लौकिकफलप्राप्ति केलिये अनुष्ठान :-

**सूचना:**- 3.23 और 3.24 में बताये गये श्लोकों का निर्दिष्ट फल प्राप्ति के लिये 3.10 में (पृ. 117) में दर्शाये गये विनियोग एवं न्यासादि का ही प्रयोग करें। केवल विनियोग एवं ऋष्यादिन्यास में **'सर्वारिष्टनिवृत्त्यर्थे'** के स्थान पर अपने अभीष्टफल को कहें अथवा **'ममाशीष्टफलसिद्ध्यर्थे'** ऐसे पाठ करें।

1. कार्यसिद्धिः :-

(क) धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः। मामकाः पाण्डवाश्चैव किमकुर्वत संजय।।1.1।।
जप संख्या 25,000; 21 दिन में, पार्थसारथी का ध्यान करें।

(ख) एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना। जहि शत्रुं महाबाहो कामरूपं दुरासदम्।।3.43।।
जप संख्या 1,25,000; 51 दिन में, पार्थसारथी का ध्यान करें।

(ग) यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्। यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्।।9.27।।
जप संख्या 1,25,000; 51 दिन में, पार्थसारथी का ध्यान करें।

(घ) ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते। अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते।।13.12।।
जप संख्या 5,00,000; 151 दिन में, पार्थसारथी का ध्यान करें।

(ङ) सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम्। सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति।।13.13।।
जप संख्या 25,000; 25 दिन में, पार्थसारथी का ध्यान करें।

(च) सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज। अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः।।18.66।।
जप संख्या 25,000; 25 दिन में, पार्थसारथी का ध्यान करें।

2. रोगनाशः :-

(क) कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम्। अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन।।2.2।।
जप संख्या 25,000; 11 दिन में, पार्थसारथी का ध्यान करें।

(ख) **मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय। मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव।।7.7।।**
जप संख्या 1,25,000; 81 दिन में, पार्थसारथी का ध्यान करें।

**3. स्वप्नसिद्धिः –**

(क) **कार्पण्यदेषोपहतस्वभावः पृच्छामि त्वां धर्मसम्मूढचेताः।**
**यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्।।2.7।।**
जप संख्या 51,000; 21 दिन में, पार्थसारथी का ध्यान करें।

(ख) **व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे। तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम्।।3.2।।**
जप संख्या 11,000; 11 दिन में, पार्थसारथी का ध्यान करें।

**4. विपत्तिनाशः –**

(क) **लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ। ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्।।3.3।।**
जप संख्या 1,25,000; 48 दिन में, पार्थसारथी का ध्यान करें।

(ख) **भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्। सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति।।5.29।।**
जप संख्या 51,000; 21 दिन में, पार्थसारथी का ध्यान करें।

**5. पूर्वजन्मज्ञानम् –**

(क) **अपरं भवतो जन्म परं जन्म विवस्वतः। कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति।।4.4।।**
जप संख्या 5,00,000; 51 दिन में, पार्थसारथी का ध्यान करें।

(ख) **बहूनि मे व्यतीतानि जन्मानि तव चार्जुन। तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप।।4.5।।**
जप संख्या 6,00,000; 51 दिन में, पार्थसारथी का ध्यान करें।

**6. धनप्राप्तिः –**

(क) **यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते। एकं सांख्यं च योगं च यः पश्यति स पश्यति।।5.5।।**
जप संख्या 48,000; 27 दिन में, पार्थसारथी का ध्यान करें।

(ख) **वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः। याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि।।10.16।।**
जप संख्या 28,000; 21 दिन में, पार्थसारथी का ध्यान करें।

(ग) **अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वां सर्वतोऽनन्तरूपम्।**
**नान्तं न मध्यं न पुनस्तवादिं पश्यमि विश्वेश्वर विश्वरूप।। 11.16।।**
जप संख्या 25,000; 11 दिन में, पार्थसारथी का ध्यान करें।

(घ) **यच्चावहासार्थमसत्कृतोऽसि विहारशय्यासनभोजनेषु।**
**एकोऽथवाप्यच्युत तत्समक्षं तत्क्षामये त्वामहमप्रमेयम्।।11.42।।**

अथवा – **अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा भयेन च प्रव्यथितं मनो मे।**
**तदेव मे दर्शय देवरूपं प्रसीद देवेश जगन्निवास।।11.45।।**

अथवा – **मा ते व्यथा मा च विमूढभावो दृष्ट्वा रूपं घोरमीदृङ् ममेदम्।**
**व्यपेतभीः प्रीतमनाः पुनस्त्वं तदेव मे रूपमिदं प्रपश्य।।11.49।।**

अथवा – **इत्यर्जुनं वासुदेवस्तथोक्त्वा स्वकं रूपं दर्शयामास भूयः।**
**आश्वासयामास च भीतमेनं भूत्वा पुनः सौम्यवपुर्महात्मा।।11.50।।**

अथवा – **दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन। इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः।।11.51।।**

अथवा – **सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम। देवा अप्यस्य रूपस्य नित्यं दर्शनकांक्षिणः।।11.52।।**

अथवा – **नाहं वेदैर्न तपसा न दानेन न चेज्यया। शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा।।11.53।।**

इन में से किसी भी एक को जपें। जप संख्या 1,25,000; 51 दिन में, पार्थसारथी का ध्यान करें।

**7. दारिद्र्यनाशः –**

**नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्वत एव सर्व।**
**अनन्तवीर्यामितविक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि सर्वः।।11.40।।**

जप संख्या 1,25,000; 51 दिन में, पार्थसारथी का ध्यान करें।

**8. शत्रुनाशपूर्वकविजयप्राप्तिः –**

(क) **बन्धुरात्मात्मनस्तस्य येनात्मनैवात्मना जितः। अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत्।।6.6।।**
जप संख्या 21,000; 21 दिन में, पार्थसारथी का ध्यान करें।

(ख) **शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया। आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत्।।6.25।।**
**यतो यतो निश्चरति मनश्चञ्चलमस्थिरम्। ततस्ततो नियम्यैतदात्मन्येव वशं नयेत्।।6.26।।**
इन दोनों को एक साथ जपें। जप संख्या 21,000; 21 दिन में, पार्थसारथी का ध्यान करें।

9. सर्वप्रियता –

**यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति। तस्याहं न प्रणश्यामि स च मे न प्रणश्यति।।6.20।।**

जप संख्या 5,25,000; 151 दिन में, गोपालकृष्ण का ध्यान करें।

10. ऋणमुक्तिः –

(क) **सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः। सर्वथा वर्तमानोऽपि स योगी मयि वर्तते।।6.31।।**

जप संख्या 5,25,000; 151 दिन में, पार्थसारथी का ध्यान करें।

(ख) **तेषामहं समुद्धर्ता मृत्युसंसारसागरात्। भवामि नचिरात्पार्थ मय्यावेशितचेतसाम्।।12.7।।**

जप संख्या 1,25,000; 51 दिन में, पार्थसारथी का ध्यान करें।

11. शत्रुबाधाविमुक्तिः –

**अभ्यासयोगयुक्तेन चेतसा नान्यगामिना। परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन्।।8.8।।**

जप संख्या 1,25,000; 51 दिन में, पार्थसारथी का ध्यान करें।

12. सन्तानप्राप्तिः –

**न च मां तानि कर्माणि निबध्नन्ति धनञ्जय। उदासीनवदासीनमसक्तं तेषु कर्मसु।।9.9।।**

जप संख्या 1,90,000; 51 दिन में, पार्थसारथी का ध्यान करें।

13. योगक्षेमप्राप्तिः –

**अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते। तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्।।9.22।।**

जप संख्या 1,25,000; 48 दिन में, पार्थसारथी का ध्यान करें।

**14. सुखप्राप्तिः -**

**पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति। तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः।।9.26।।**

जप संख्या 1,25,000; 48 दिन में, पार्थसारथी का ध्यान करें।

**15. भयनाशः -**

(क) **मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः। स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्।।9.32।।**

जप संख्या 1,25,000; 48 दिन में, पार्थसारथी का ध्यान करें।

(ख) **श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः। अफलाकांक्षिभिर्युक्तैः सात्त्विकं परिचक्षते।।17.17।।**

जप संख्या 75,000; 15 दिन में, पार्थसारथी का ध्यान करें।

**16. सिद्धिप्राप्तिः -**

**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु। मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः।।9.34।।**

जप संख्या 2,11,000; 81 दिन में, पार्थसारथी का ध्यान करें।

**17. दुःखनाशः -**

(क) **यो मामजमनादिं च वेत्ति लोकमहेश्वरम्। असम्मूढः स मर्त्येषु सर्वपापैः प्रमुच्यते।।10.3।।**

जप संख्या 1,25,000; 48 दिन में, पार्थसारथी का ध्यान करें।

(ख) **तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्। ददामि बुद्धियोगं तं येन मामुपयान्ति ते।।10.10।।**

जप संख्या 27,000; 21 दिन में, पार्थसारथी का ध्यान करें।

(ग) **श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते। ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम्।।12.12।।**
जप संख्या 15,000; 11 दिन में, पार्थसारथी का ध्यान करें।

**18. विघ्ननाशः –**
**दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम्। सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम्।।11.11।।**
जप संख्या 15,000; 11 दिन में, पार्थसारथी का ध्यान करें।

**19. प्रेमवृद्धिः –**
(क) **त्वमादिदेवः पुरुषः पुराणस्त्वमस्य विश्वस्य परं निधानम्।**
**वेत्तासि वेद्यं च परं च धाम त्वया ततं विश्वमनन्तरूप।।11.38।।**
जप संख्या 21,000; 11 दिन में, पार्थसारथी का ध्यान करें।

(ख) **ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना। करणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः।।18.18।।**
जप संख्या 21,000; 11 दिन में, पार्थसारथी का ध्यान करें।

**20. भूतप्रेतबाधानिवारणम् –**
(क) **स्थाने हृषीकेश तव प्रकीर्त्या जगत्प्रहृष्यत्यनुरज्यते च।**
**रक्षांसि भीतानि दिशो द्रवन्ति सर्वे नमस्यन्ति च सिद्धसंघाः।।11.36।।**
जप संख्या 51,000; 21 दिन में, पार्थसारथी का ध्यान करें।

(ख) **वायुर्यमोऽग्निर्वरुणः शशांकः प्रजापतिस्त्वं प्रपितामहश्च।**

**नमो नमस्तेऽस्तु सहस्रकृत्वः पुनश्च भूयोऽपि नमो नमस्ते।।11.39।।**

जप संख्या 51,000; 21 दिन में, पार्थसारथी का ध्यान करें।

**21. प्रसन्नताप्राप्तिः –**

(क) **पितासि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान्।**
**न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव।।11.43।।**

जप संख्या 21,000; 11 दिन में, पार्थसारथी का ध्यान करें।

**22. येन केनापि क्षमाप्राप्तिसाधनम् –**

**तस्मात्प्रणम्य प्रणिधाय कायं प्रसादये त्वामहमीशमीड्यम्।**
**पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायार्हसि देव सोढुम्।।11.44।।**

जप संख्या 1,25,000; 48 दिन में, पार्थसारथी का ध्यान करें।

**23. मृत्युकालज्ञानम् –**

**यदा सत्त्वे प्रवृद्धे तु प्रलयं यान्ति देहभृत्। तदोत्तमविदां लोकानमलान्प्रतिपद्यते।।14.14।।**

जप संख्या 1,08,000; 51 दिन में, पार्थसारथी का ध्यान करें।

**24. उदररोगनाशः –**

**अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः। प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्।।15.14।।**

जप संख्या 1,25,000; 21 दिन में, पार्थसारथी का ध्यान करें।

**25. दोशनाशपूर्वकक्रोधशमनम् –**

(क) **सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनञ्च। वेदैश्च सवैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम्।।15.15।।**

जप संख्या 1,25,000; 48 दिन में, पार्थसारथी का ध्यान करें।

(ख) **अनेकचित्तविभ्रान्ता मोहजालसमावृताः। प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ।।16.16।।**

जप संख्या 11,000; 11 दिन में, पार्थसारथी का ध्यान करें।

(ग) **त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः। कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत्।।16.21।।**

जप संख्या 1,25,000; 48 दिन में, पार्थसारथी का ध्यान करें।

**26. वैभवप्राप्तिः –**

**यो मामेवमसम्मूढो जानाति पुरुषोत्तमम्। स सर्वविद्भजति मां सर्वभावेन भारत।।15.20।।**

जप संख्या 1,25,000; 48 दिन में, पार्थसारथी का ध्यान करें।

## 3.24 श्रीमद्भगवद्गीता से पारमार्थिकफलप्राप्ति केलिये अनुष्ठान :-

**1. अन्तःकरणशुद्धिः –**

(क) **धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः। मामकाः पाण्डवाश्चैव किमकुर्वत संजय।।1.1।।**

जप संख्या 25,000; 21 दिन में, पार्थसारथी का ध्यान करें।

(ख) **व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे। तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम्।।3.2।।**

जप संख्या 11,000; 11 दिन में, पार्थसारथी का ध्यान करें।

(ग) **सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम्। सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति।।13.13।।**

जप संख्या 25,000; 21 दिन में, पार्थसारथी का ध्यान करें।

**2. मानसतापशमनम् –**

**कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम्। अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन।।2.2।।**

जप संख्या 25,000; 21 दिन में, पार्थसारथी का ध्यान करें।

**3. कामादिशत्रुविजयप्राप्तिः –**

(क) **एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना। जहि शत्रुं महाबाहो कामरूपं दुरासदम्।।3.43।।**

जप संख्या 51,000; 21 दिन में, पार्थसारथी का ध्यान करें।

(ख) **अभ्यासयोगयुक्तेन चेतसा नान्यगामिना। परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन्।।8.8।।**

जप संख्या 1,25,000; 51 दिन में, पार्थसारथी का ध्यान करें।

(ग) **त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः। कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत्।।16.21।।**

जप संख्या 1,25,000; 81 दिन में, पार्थसारथी का ध्यान करें।

(घ) **श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः। अफलाकांक्षिभिर्युक्तैः सात्त्विकं परिचक्षते।।17.17।।**

जप संख्या 81,000; 21 दिन में, पार्थसारथी का ध्यान करें।

4. भक्तेः दृढता प्राप्त्यर्थम् -

(क) **बहूनि मे व्यतीतानि जन्मानि तव चार्जुन। तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप।।4.5।।**
जप संख्या 6,00,000; 51/90 दिन में, पार्थसारथी का ध्यान करें।

(ख) **यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति। तस्याहं न प्रणश्यामि स च मे न प्रणश्यति।।6.20।।**
जप संख्या 5,10,000; 150 दिन में, पार्थसारथी का ध्यान करें।

(ग) **ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते। अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते।।13.12।।**
जप संख्या 5,25,000; 150 दिन में, पार्थसारथी का ध्यान करें।

(घ) **यो मामेवमसम्मूढो जानाति पुरुषोत्तमम्। स सर्वविद्भजति मां सर्वभावेन भारत।।15.19।।**
जप संख्या 1,25,000; 51 दिन में, पार्थसारथी का ध्यान करें।

5. चित्तचाञ्चल्यनाशार्थम् -

**लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ। ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्।।3.3।।**
जप संख्या 1,25,000; 48 दिन में, पार्थसारथी का ध्यान करें।

6. साधनविघ्ननाशार्थम् -

(क) **भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्। सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति।।5.29।।**
जप संख्या 48,000; 21 दिन में, पार्थसारथी का ध्यान करें।

(ख) **दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम्। सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम्।।11.11।।**

जप संख्या 21,000; 11 दिन में, पार्थसारथी का ध्यान करें।

**7. मनोजयार्थम्** –

**शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया। आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत्।।6.25।।**

जप संख्या 21,000; 11 दिन में, पार्थसारथी का ध्यान करें।

**8. ध्यानयोग्यताप्राप्त्यर्थम्** –

(क) **यतो यतो निश्चरति मनश्चञ्चलमस्थिरम्। ततस्ततो नियम्यैतदात्मन्येव वशं नयेत्।।6.26।।**

जप संख्या 21,000; 11 दिन में, पार्थसारथी का ध्यान करें।

(ख) **वायुर्यमोऽग्निर्वरुणः शशांकः प्रजापतिस्त्वं प्रपितामहश्च।**
**नमो नमस्तेऽस्तु सहस्रकृत्वः पुनश्च भूयोऽपि नमो नमस्ते।।11.39।।**

जप संख्या 21,000; 11 दिन में, पार्थसारथी का ध्यान करें।

(ग) **स्थाने हृषीकेश तव प्रकीर्त्या जगत्प्रहृष्यत्यनुरज्यते च।**
**रक्षांसि भीतानि दिशो द्रवन्ति सर्वे नमस्यन्ति च सिद्धसंघाः।।11.36।।**

जप संख्या 21,000; 11 दिन में, पार्थसारथी का ध्यान करें।

9. शरणागतियोग्यताप्राप्त्यर्थम् –

(क) **कार्पण्यदेषोपहतस्वभावः पृच्छामि त्वां धर्मसम्मूढचेताः।**

**यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्।। 2.7।।**

जप संख्या 51,000; 21 दिन में, पार्थसारथी का ध्यान करें।

(ख) **मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः। स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्।।9.32।।**

जप संख्या 51,000; 21 दिन में, पार्थसारथी का ध्यान करें।

(ग) **मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु। मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः।।9.34।।**

जप संख्या 1,25,000; 81 दिन में, पार्थसारथी का ध्यान करें।

10. विश्वासदृढताप्राप्त्यर्थम् –

**अपरं भवतो जन्म परं जन्म विवत्सतः। कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति।।4.4।।**

जप संख्या 5,00,000; 148 दिन में, पार्थसारथी का ध्यान करें।

11. सांख्यनिष्ठाप्राप्त्यर्थम् –

**यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते। एकं सांख्यं च योगं च यः पश्यति स पश्यति।।5.5।।**

जप संख्या 48,000; 27 दिन में, पार्थसारथी का ध्यान करें।

सरितास्सामरास्सर्वे सिद्धविद्याधरोरगाः। रौद्रदृष्ट्या तु ये दृष्टाः क्षयं गच्छन्ति तत्क्षणात्।।13।।
सौरे क्षमस्वापराधं सर्वभूतहिताय च। प्रसादं कुरु मे सौरे वरार्थेऽहं तवाश्रितः।।14।।
एवं स्तुतस्तदा सौरि ग्रहराजो महाबलः। अब्रवीच्च शनिर्वाक्यं हृष्टरोमा स भास्करिः।।15।।
तुष्टोऽहं तव राजेन्द्र स्तोत्रेणानेन सुव्रत। एवं वरं दास्यामि यत्ते मनसि वर्तते।।16।।
गोचरे जन्मलग्ने वा दशास्वन्तर्दशासु च। यः पठेद् द्वित्रिसन्ध्यं वा शुचिर्भूत्वा समाहितः।। 17।।
रक्षामि सततं तस्य पीडास्वन्यग्रहस्य च। अनेनैव प्रकारेण पीडामुक्तं जगद्भवेत्।।8।।

## 4.22 अथ सर्पसूक्तम् (नवनागस्तोत्रम्)

ब्रह्मलोके च ये सर्पाः शेषनागपुरोगमाः। नमोऽस्तु तेभ्यः सुप्रीताः प्रसन्नाः सन्तु मे सदा।1।
विष्णुलोके ये सर्पाः वासुकीप्रमुखाश्च ये। नमोऽस्तु तेभ्यः सुप्रीताः प्रसन्नाः सन्तु मे सदा।2।
रुद्रलोके च ये सर्पाः तक्षकप्रमुखास्तथा। नमोऽस्तु तेभ्यः सुप्रीताः प्रसन्नाः सन्तु मे सदा।3।
खाण्डवस्य तथा दाहे स्वर्गं ये च समाश्रिताः। नमोऽस्तु तेभ्यः सुप्रीताः प्रसन्नाः सन्तु मे सदा।4।
सर्पसत्रे च ये सर्पाः आस्तिकेन रक्षिताः। नमोऽस्तु तेभ्यः सुप्रीताः प्रसन्नाः सन्तु मे सदा।5।
प्रलये चैव ये सर्पाः कर्कोटकप्रमुखाश्च ये। नमोऽस्तु तेभ्यः सुप्रीताः प्रसन्नाः सन्तु मे सदा।6।
धर्मलोके च ये सर्पाः वैतरण्यां समाश्रिताः। नमोऽस्तु तेभ्यः सुप्रीताः प्रसन्नाः सन्तु मे सदा।7।
ये सर्पाः पार्वतीयेषु दरीसंधिषु संस्थिताः। नमोऽस्तु तेभ्यः सुप्रीताः प्रसन्नाः सन्तु मे सदा।8।
ग्रामे वा यदि वाऽरण्ये ये सर्पाः प्रसरन्ति हि। नमोऽस्तु तेभ्यः सुप्रीताः प्रसन्नाः सन्तु मे सदा।9।

पृथिव्यां चैव ये सर्पा ये सर्पा बिलसंस्थिता:। नमोऽस्तु तेभ्य: सुप्रीता: प्रसन्ना: सन्तु मे सदा।10।

रसातले च ये सर्पा अनन्ताद्या महाबला:। नमोऽस्तु तेभ्य: सुप्रीता: प्रसन्ना: सन्तु मे सदा।11।

अथ नवनागनामस्तोत्रम् -

अनंतं वासुकिं शेषं पद्मनाभं च कम्बलं। शंखपालं धार्तराष्ट्रं तक्षकं कालियं तथा।1।

एतानि नवनामानि नागानां च महात्मनां। सायंकाले पठेन्नित्यं प्रात:काले विशेषत:।2।

तस्मै विषभयं नास्ति सर्वत्र विजयी भवेत्।3।

## 4.23 ध्रुवस्तुति:( भागवतमहापुराणं 4.9.6-17 )

योऽन्त: प्रविश्य मम वाचमिमां प्रसुप्तां, संजीवयत्यखिलशक्तिधर: स्वधाम्ना।
अन्यांश्च हस्तचरणश्रवणत्वगादीन्, प्राणान्नमो भगवते पुरुषाय तुभ्यम्।।1।।
एकस्त्वमेव भगवन्निदमात्मशक्त्या, मायाख्ययोरुगुणया महदाद्यशेषम्।
सृष्ट्वानुविश्य पुरुषस्तदसद्गुणेषु, नानेव दारुषु विभावसुवद्विभासि।।2।।
त्वद्दत्तया वयुनेदमचष्ट विश्वं, सुप्तप्रबुद्ध इव नाथ भवत्प्रपन्न:।
तस्यापवर्ग्यशरणं तव पादमूलं, विस्मर्यते कृतविदा कथमार्तबन्धो।।3।।
नूनं विमुष्टमतयस्तव मायया ते, ये त्वां भवाप्ययविमोक्षणमन्यहेतो:।
अर्चन्ति कल्पकतरुं कुणपोपभोग्य-, मिच्छन्ति यत्स्पर्शजं निरयेऽपि नृणाम्।।4।।
या निर्वृतिस्तनुभृतां तव पादपद्म, ध्यानाद्भवज्जनकथाश्रवणेन वा स्यात्।

सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत्, किं त्वन्तकासिलुलितात्पततां विमानात्।।5।।
भक्तिं मुहुः प्रवहतां त्वयि मे प्रसंगो, भूयादनन्त महताममलाशयानाम्।
येनांजसोल्बणमुरुव्यसनं भवाब्धिं, ते ये भवद्गुणकथामृतपानमत्तः।।6।।
ते न स्मरन्त्यतितरां प्रियमीश मर्त्यं, ये चान्वदः सुतसुहृद्गृहवित्तदाराः।
ये त्वब्जनाभ भवदीयपदारविन्द-, सौगन्ध्यलुब्धहृदयेषु कृतप्रसंगाः।।7।।
तिर्यङ्नगद्विजसरीसृपदेवदैत्य-, मर्त्यादिभिः परिचितं सदसद्विशेषं।
रूपं स्थविष्ठमज ते महदाद्यनेकं, नातः परं परम वेद्मि न यत्र वादः।।8।।
कल्पान्त एतदखिलं जठरेण गृह्णन्, शेते पुमान् स्वदृगनन्तसखस्तदंके।
यन्नाभिसिन्धुरुहकांचनलोकपद्म-, गर्भे द्युमान्भगवते प्रणतोऽस्मि तस्मै।।9।।
त्वं नित्यमुक्तपरिशुद्धविबुद्ध आत्मा, कूटस्थ आदिपुरुषो भगवांस्त्र्यधीशः।
यद्बुद्ध्यवस्थितिमखण्डितया स्वदृष्ट्या, द्रष्टा स्थितावधिमखो व्यतिरिक्त आस्से।।10।।
यस्मिन् विरुद्धगतयो ह्यनिशं पतन्ति, विद्यादयो विविधशक्तय आनुपूर्व्यात्।
तद्ब्रह्म विश्वभवमेकमनन्तमाद्य-, मानन्दमात्रमविकारमहं प्रपद्ये।।11।।
सत्याशिषो हि भगवंस्तव पादपद्म-, माशीस्तथानुभजतः पुरुषार्थमूर्तेः।
अप्येवमर्य भगवान् परिपाति दीनान्, वाश्रेव वत्सकमनुग्रहकातरोऽस्मान्।।12।।

।। इति श्रीमद्भागवतमहापुराणान्तर्गतध्रुवस्तुतिः सम्पूर्णम्।।

### 4.24 अथ प्रातः स्मरणस्तोत्रम्ः-

प्रातः स्मरामि हृदि संस्फुरदात्मतत्त्वं, सच्चित्सुखं परमहंसगतिं तुरीयं।
यः स्वप्नजागरसुषुप्तमवैति नित्यं, तद्ब्रह्मनिष्कलमहं न च भूतसंघः।।1।।
प्रातर्भजामि मनसा वचसामगम्यं, वाचो विभान्ति निखिला यदनुग्रहेण।
यं नेति नेति वचनैर्निगमा अवोचंस्तं देवदेवमजमच्युतमाहुरग्रयम्।।2।।
प्रातर्नमामि तमसः परमर्कवर्णं, पूर्णं सनातनपदं पुरुषोत्तमाख्यम्।
यस्मिन्निदं जगदशेषमशेषमूर्तौ, रज्ज्वां भुजंगम इव प्रतिभासितं वै।।3।।
श्लोकत्रयमिदं पुण्यं लोकत्रयविभूषणम्। प्रातः काले पठेद्यस्तु सो गच्छेत्परमं पदं।।4।।

।। हरिः ॐ तत्सत्।। ।।ॐ शान्तिः शान्तिः शान्तिः।।

# 5. अग्नि (हवन) खण्डः

## हवन की सर्वसामान्यविधिः (सकल कर्म व अनुष्ठान केलिये)

### 5.1 अथ कुण्ड विचारः -

**'योनिकुण्डे भगाकारे वर्तुले वा अर्द्धचन्द्रके। नवत्रिकोणकुण्डे वा चतुरस्रेऽष्टपत्रके।।**
**योनिकुण्डे भवेद्वाग्मी भगे चाकृष्टिरुत्तमा। वर्तुले तु भवेल्लक्ष्मीरर्धचन्द्रे त्रयम्भवेत्।।**
**नवत्रिकोणकुण्डे तु खेचरत्त्वम्प्रजायते। चतुरस्रे भवेच्छान्तिर्लक्ष्मीः पुष्टिररोगता।।**
**पद्माभे सर्वसंपत्तिरचिरादेव जायते। अष्टकोणे तु सुभगे समीहितफलम्भवेत्।।'**

अर्थात् योनि, भग, गोल, अर्धचन्द्र, नौ त्रिकोण, चतुर्भुज (चतुरस्र), कमल अथवा अष्टकोण के आकार में कुण्ड बनाकर हवन करें। प्रत्येक का फल अलग-अलग है - योनि कुण्ड में हवन करने से वाक्सिद्धि फल कहा गया है । तथा भगाकार कुण्ड - श्रेष्ठ आकर्षण, गोल कुण्ड - लक्ष्मी, अर्धचन्द्र कुण्ड - पूर्वोक्त तीनों यानि वाक्सिद्धि सहित श्रेष्ठ आकर्षण और लक्ष्मी, नौ त्रिकोण कुण्ड- आकाशगामित्व, चतुर्भुज (चतुरस्र) कुण्ड - शान्ति सहित पुष्टि व लक्ष्मी और नीरोगता, कमलाकार कुण्ड - शीघ्र सर्व सम्पत्ति प्राप्ति और अष्टकोण कुण्ड में वांछित सम्यक्फल प्राप्त होता है।

### 5.1-1 अथ कुण्डपूजनम् :-

निर्मित कुण्ड में अष्टदल के अन्दर अग्नि की सप्तजिह्वा को बनाकर हवनकर्ता आसन की कुशाओं के अग्रभाग को पूर्व या उत्तर की ओर करके बिछाकर उसपर बैठें और आचमन, प्राणायाम आदि सामान्य कर्म करके संकल्प करें -

**'ॐ विष्णु.........**अमुक**पूजनकर्माङ्गभूतहोमकर्मांगभूतकुण्डपूजनादिपूर्वकभूशोधनपूर्वकपंचभूसंस्कारादिसहितः कुण्डे अग्निस्थापनं करिष्ये'।**

भूशोधन इस प्रकार है – **'भूरसीति भूमिशोधनम्'** अर्थात् भूरसि इत्यादि मन्त्र से हवनकुण्ड अथवा स्थण्डिल का पंचगव्य से प्रोक्षण कर भूमि शुद्धि की भावना करें –

**'ॐ भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री। पृथिवीं यच्छ पृथिवीं दृꣳह पृथिवीम्मा हिꣳसीः ।1।'**

हस्तप्रक्षालन करके **'अश्मा चेति मृत्तिका स्थापनम्'** अर्थात् अश्मा च इत्यादि मन्त्र से हवनकुण्ड अथवा स्थण्डिल में पवित्र नदी की थोड़ी मृत्तिका ड़ालें –

**'ॐ अश्मा च मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे सिकताश्च मे वनस्पतयश्च मे हिरण्यञ्च मे यश्च मे श्यामञ्च मे लोहञ्च मे सीसञ्च मे त्रपु च मे यज्ञेन कल्पन्ताम्।'**

तत्पश्चात् **'एष स्तोमेति दर्भं गृह्णाति'** अर्थात् एष स्तोम इत्यादि मन्त्र से दर्भ को ग्रहण कर सम्मार्जन करें –

**'ॐ एष स्तोमो मरुतऽइयङ्गीर्मान्दार्यस्य मान्यस्य कारोः। एषामासीदूतन्वेव यां विद्याभेषं वृजनशीर दानुम्।'**

कुशोदक से प्रोक्षण करें –

**'ॐ आपो हिष्ठा मयोभुवः। ॐ यो वः शिवतमो रसः। ॐ तस्माऽरङ्गमाम वः।'**

कुण्डाभिमानी देवता का आवाहन करें –

**'ॐ आवाहयामि तत्कुण्डं विश्वकर्मविनिर्मितम्। शरीरं यच्च ते दिव्यमग्न्यधिष्ठानमद्भुतम्।।**

**ॐ भूर्भुवःस्वः कुण्डाय नमः। कुण्डमावाहयामि स्थापयामि। भो कुण्ड इह आगच्छ इह तिष्ठ।'**

प्रार्थना करें -

**'ये च कुण्डे स्थिता देवाः कुण्डाङ्गे याश्च देवताः। ऋद्धिं यच्छन्तु ते सर्वे यज्ञसिद्धिं ददन्तु नः।।'**

अब गन्धाक्षतपुष्प से कुण्ड में देवताओं का आवाहन करें, सर्व प्रथम कुण्ड के मध्य में विश्वकर्मा का आवाहन करें -

**'ॐ विश्वकर्मन्हविषा वर्द्धनेन त्रातारमिन्द्रमकृणोरवद्ध्यम्। तस्मै विशः समनमन्त पूर्वीरयमुग्रो विहव्यो यथासत्।।**
**उपयाम गृहीतोसीन्द्राय त्वा विश्वकर्मणऽएष ते योनिरिन्द्राय त्वा विश्वकर्मणे।।**

**'ॐ भूर्भुवःस्वः विश्वकर्मणे नमः। विश्वकर्माणमावाहयामि स्थापयामि। भो विश्वकर्मन् इह आगच्छ इह तिष्ठ।'**

प्रार्थना करें -

**'ब्रह्म वक्त्रं भुजौ क्षत्रमूरू वैश्यः प्रकीर्तितः। पादौ यस्य तु शूद्रो हि विश्वकर्मात्मने नमः।।1।।**
**अज्ञानाज्ज्ञानतो वापि दोषाः स्युः खननोद्भवाः। नाशय त्वखिलाँस्ताँस्तु विश्वकर्मन्नमोऽस्तु ते।।2।।'**

प्रथम सत्त्वात्मक श्वेत मेखला में -

**'ॐ ब्रह्म जज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचो वेनऽआवः। स बुध्न्याऽउपमाऽअस्य विष्ठाः सतश्च योनिमसतश्च विवः।। ॐ भूर्भुवःस्वः ब्रह्मणे नमः। ब्रह्माणमावाहयामि स्थापयामि। भो ब्रह्मन् इह आगच्छ इह तिष्ठ।'**

पुनः प्रार्थना करें -

**'हंसपृष्ठसमारूढ आदिदेव जगत्पते। रक्षार्थं मम यज्ञस्य मेखलायां स्थिरो भव।।'**

द्वितीय रजोआत्मक रक्त मेखला में -

**'ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पाꣳसुरे स्वाहा।।'**
**ॐ भूर्भुवःस्वः विष्णवे नमः। विष्णुमावाहयामि स्थापयामि। भो विष्णो इह आगच्छ इह तिष्ठ।'**

प्रार्थना करें –

'ॐ विष्णो यज्ञपते देव दुष्टदैत्यनिषूदन। विभो यज्ञस्य रक्षार्थं कुण्डे सन्निहितो भव।।'

तृतीय तमसात्मक कृष्ण मेखला में –

'ॐ नमस्ते रुद्रमन्यवऽउतोतऽइषवे नमः। बाहुभ्यामुतते नमः।। ॐ भूर्भुवःस्वः रुद्राय नमः। रुद्रमावाहयामि स्थापयामि। भो रुद्र इह आगच्छ इह तिष्ठ।'

प्रार्थना करें –

'गंगाधर महादेव वृषारूढ महेश्वर। आगच्छ मम यज्ञेऽस्मिन्रक्षार्थं रक्षसां गणात्।।'

कुण्ड की योनि में –

'ॐ क्षत्रस्य योनिरसि क्षत्रस्य नाभिरसि। मा त्वा हिꣳसीन्मा मा हिꣳसीः।।
आगच्छ देवि कल्याणि जगदुत्पत्तिहेतुके। मनोभवयुते रम्ये योनिस्त्वं सुस्थिरा भव।।
ॐ भूर्भुवःस्वः योन्यां योन्यै नमः। योनिमावाहयामि स्थापयामि। भो योने इह आगच्छ इह तिष्ठ।'

प्रार्थना करें –

'सेवन्ते महतीं योनिं देवर्षिसिद्धमानवाः। चतुरशीतिलक्षाणि पन्नगाद्याः सरीसृपाः।।
पशवः पक्षिणः सर्वे संसरन्ति यतो भुवि। योनिरित्येव विख्याता जगदुत्पत्तिहेतुका।।
मनोभवयुता देवी रतिसौख्यप्रदायिनी। मोहयित्री सुराणां च जगद्धात्रि नमोऽस्तु ते।।
योने त्वं विश्वरूपाऽसि प्रकृतिर्विश्वधारिणी। कामस्था कामरूपा च विश्वयोन्यै नमो नमः।।'

कुण्ड के कण्ठ में –

'ॐ नीलग्रीवाः शितिकण्ठा दिवꣳरुद्राऽउपश्रिताः। तेषाꣳसहस्रयोजने वधन्वानि तन्मसि।।1।।
नीलग्रीवाः शितिकण्ठाः शर्वाऽधः क्षमाचराः। तेषाꣳसहस्रयोजने वधन्वानि तन्मसि।।2।।
कुण्डस्य कण्ठदेशोऽयं नीलजीमूतसन्निभः। अस्मिन्नावाहये रुद्रं शितिकण्ठं कपालिनम्।।
ॐ भूर्भुवःस्वः कण्ठे रुद्राय नमः। रुद्रमावाहयामि स्थापयामि। भो रुद्र इह आगच्छ इह तिष्ठ।'

प्रार्थना करें –

'कण्ठमंगलरूपेण सर्वकुण्डे प्रतिष्ठितः। परितो मेखलास्त्वत्तो रचिता विश्वकर्मणा।।'

कुण्ड के नाभि में –

'ॐ नाभिर्मे चित्तं विज्ञानम्पायुर्मेऽपचितिर्भसत्। आनन्दनन्दावाण्डौ मे भगः सौभाग्यम्पसः।
जंघाभ्यां पद्भ्यां घर्मोऽअस्मि विशिराजा प्रतिष्ठितः।। पद्माकाराऽथवा कुण्डसदृशाकृति बिभ्रती।
आधारः सर्वकुण्डानां नाभिमावाहयाम्यहम्।। ॐ भूर्भुवःस्वः नाभ्यां नाभ्यै नमः।
नाभिमावाहयामि स्थापयामि। भो नाभे इह आगच्छ इह तिष्ठ।'

प्रार्थना करें –

'नाभे त्वं कुण्डमध्ये तु सर्वदेवैः प्रतिष्ठिता। अतस्त्वां पूजयामीह शुभदा सिद्धिदा भव।।'

कुण्ड के अन्दर नैऋत्यकोण में –

'ॐ वास्तोष्पते प्रतिजानीह्यस्मान्स्वावेशोऽनमीवो भवानः। यत्त्वेमहे प्रतितन्नो जुषस्व शन्नो भव द्विपदे शं चतुष्पदे।।

आवाहयामि देवेशं वास्तुदेवं महाबलम्। देवदेवं गणाध्यक्षं पातालतलवासिनम्।।'

ॐ भूर्भुवःस्वः वास्तुपुरुषय नमः। वास्तुपुरुषमावाहयामि स्थापयामि। भो वास्तुपुरुष इह आगच्छ इह तिष्ठ।'

प्रार्थना करें -

'यस्य देहे स्थिता क्षोणी ब्रह्माण्डं विश्वमंगलम्। व्यापिनं भीमरूपं च सुरूपं विश्वरूपिणम्।।

पितामहसुतं मुख्यं वन्दे वास्तुपतिं प्रभुम्। विभो यज्ञस्य रक्षार्थं कुण्डे सन्निहितो भव।।

वास्तुपुरुष देवेश सर्वविघ्नहरो भव। शान्तिं कुरु सुखं देहि सर्वान्कामान्प्रयच्छ मे।।'

एकतन्त्र से कुण्ड में आवाहित समस्त देवताओं की प्राण प्रतिष्ठा करें -

'ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञं समिमन्दधातु। विश्वेदेवासऽइह मादयन्मों3प्रतिष्ठ।।

ॐ भूर्भुवःस्वः विश्वकर्मादिवास्तुपुरुषान्ताः सर्वे कुण्डस्थदेवताः सुप्रतिष्ठिता वरदा भवेयुः।

ॐ भूर्भुवःस्वः विश्वकर्मादिवास्तुपुरुषान्तेभ्यः सर्वेभ्यः कुण्डस्थदेवताभ्यो नमः।

सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि।'

अब कुण्डस्थ आवाहित देवताओं को बलि देने केलिये कुण्ड के बाहर एक पात्र में दध्योदन स्थापित करें और हाथ में जल लेकर -

'ॐ भूर्भुवःस्वः विश्वकर्मादिवास्तुपुरुषान्तेभ्यः सर्वेभ्यः कुण्डस्थदेवेभ्यो नमः, इमं दध्योदनबलिं समर्पयामि।

अनेन विश्वकर्मादिवास्तुपुरुषान्तानां सर्वेषां कुण्डस्थदेवानां पूजनेन बलिदानेन च विश्वकर्मादिवास्तुपुरुषान्ताः

सर्वे कुण्डस्थदेवताः प्रीयन्ताम् न मम।।' जल छोड़ें।

## 5.1.2-1 वैदिक विधि

वैदिक विधि से अग्नि स्थापना करें – चतुरस्र कुण्ड में अष्टदल के अन्दर अग्नि की सप्तजिह्वा को बनाकर हवनकर्ता आसन की कुशाओं के अग्रभाग को पूर्व या उत्तर की ओर करके बिछाकर उसपर बैठें और आचमन प्रणायाम-आदि सामान्य कर्म करके संकल्प करें–

कुण्डपूजन के अन्तर्गत कृत भूशोधनकर्म करने के अनन्तर कुण्डपूजन के पश्चात् **पांच भूसंस्कार** करें जो की इस प्रकार हैं–

1. **'यद्देवेति दर्भैः परिसमूहनम्'** अर्थात् यद्देव इत्यादि मन्त्र से परिसमूहन संस्कार करें–

**'परिसमुह्य'** इति सूत्रम्। **'त्रिभिर्दर्भैः पांसूनपसार्य'**– इति व्याख्या। **'कृमिकीटपतङ्गाश्च विचरन्ति महीतले। तेषां संरक्षणार्थाय परिसमुह्येति कथ्यते।।'** अर्थात् धरती पर विचरने वाले कृमि, कीट, पतिङ्गे आदि की रक्षा के लिये **'परिसमुह्य'** संस्कार कहा गया है। इस संस्कार को इस प्रकार करना है– **'धृत्वाङ्गुष्ठकनिष्ठाभ्यां मूलैः साग्रैः कुशत्रयम्। तदग्रैस्तस्य रजसां पूर्वस्यामपसमर्पणम्।'** अर्थात् अंगुष्ठ और कनिष्ठिका से अग्र सहित तीन कुशा को लेकर, उनके अग्र से थोड़ी धूल (मिट्टी; निकालकर पूर्व दिशा में फेकें। मन्त्र इस प्रकार है–

**'यद्देवा देव हेडनन्देवा सश्च कृमवयम्। अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वꣳहसः।'**

2. **'मानस्तोकेत्युपलेपनम्'** अर्थात् मानस्तोक इत्यादि मन्त्र से गोबर से लीपें –

**'उपलिप्य'**– इति सूत्रम्। **'गोमयोदकेन'**– इति व्याख्या। **'पुरा इन्द्रेण वज्रेण हतो वृत्रो महासुरः। व्यापिता मेदसा पृथिवी तदर्थमुपलेपनम्।।'** अर्थात् पूर्वकाल में इन्द्र ने वज्र से जब वृत्रासुर का वध किया था तब संपूर्ण पृथिवी उसके खूनादि से अपवित्र हो गयी थी, इसलिये उसे पवित्र कर हवन के योग्य बनाने के लिये उपलेनपन संस्कार करते हैं। गोमय से हवनकुण्ड को लीपें। **'गोमये वसते लक्ष्मीः पवित्रा सर्वमंगला। यज्ञार्थे संस्कृता भूमिस्तदर्थमुपलेपनं।'** क्योंकि गोमय में लक्ष्मी का वास है, इसलिये वह पवित्र और सर्वकल्याणकारी है। यज्ञ केलिये भूमि का संस्कार करना होता है और वह संस्कार गोमय से होता है। गोमय का लक्षण–

**'रुग्णा वृद्धा प्रसूता च वन्ध्या संधिन्यमेध्यभुक्। मृतवत्सा च नैतासां ग्राह्यं मूत्रं शकृत्पयः ।1।**

**स्वच्छं तु गोमयं ग्राह्यं स्थाने च पतिते शुचौ। उपर्य्यधः परित्यज्यार्द्रजन्तु विवर्जितम्।'**

अर्थात् रोगिणी, बूढी, प्रसूता, बांझ, संधि काल में अपवित्र चीजों को खानेवाली और जिसका बछड़ा मर गया हो ऐसी गाय के दूध, मूत्र और गोबर को पूजा, हवन आदि शुभ कर्मो केलिये ग्रहण नहीं करना चाहिये। शुद्ध स्थान में गिरा हुआ स्वच्छ गोबर को ग्रहण करें, उसमें भी ध्यान रहे कि गीला न हो और कीडों से युक्त न हो एवं ऊपर व नीचे के भाग को छोड़कर लें।

**'ॐ मानस्तोके तनये मानऽआयुषि मानो गोषु मानोऽअश्वेषु रीरिषः। मानो वीरान्रुद्रभाविनो वधीर्हविष्मन्तः सदमित्वा हवामहे।',**

3. **'त्वामिद्धीत्युल्लेखनम्'** अर्थात्- **'त्वामिद्धि'**- इत्यादि मन्त्र से उल्लेखन संस्कार करें।

**'उल्लिख्य'**- इति सूत्रम् **'त्रिरुल्लिख्य- स्फ्येन त्रिरेखां कुर्यात्'**- इति व्याख्या। अर्थात् त्वामिद्धि इत्यादि मन्त्र से उक्त प्रकार से यानी तीनरेखा बनाने को उल्लेखनसंस्कार कहते हैं। **'खादिरेण हस्तमात्रेण खड्गाकृतिना स्फ्येन उल्लिख्य प्रागग्रा उदक्संस्थाः स्थण्डिल-परिमाणास्तिस्रो रेखा कुर्यात्'** अर्थात् खदिर (खैर) के पेड़ का एक हाथ लम्बा खड्ग के आकारवाले स्फय नामक अस्त्र को पूर्व की ओर आगे बढ़ाते हुये स्थण्डिल के नाप के अनुसार तीन रेखा बनायें। मन्त्र इस प्रकार हैं-

**'ॐ त्वामिद्धि ह व हसातो वाजस्य कारवः। त्वां वृत्रेष्विन्द्र सत्पतिन्नरस्त्वाङ्काष्ठा सर्वतः ।1।**

**ॐ प्रथमा द्वितीयैर्द्वितीयास्तृतीयैस्तृतीया सत्येन सत्यं यज्ञेन यज्ञो यजूभिर्यजूꣳषि सामभिः सामान्यृग्भिर्ऋचः पुरोनुवाक्याभिः पुरोनुवाक्या याज्याभिर्याज्या वषट्कारैर्वषट्कारा आहुतिभिराहुतयो मे कामान्समर्द्धयन्तु भूः स्वाहा ।2।**

**ॐ दक्षिणमारोह त्रिष्टुप्त्वाऽअवतु। बृहत्साम पञ्चदशस्तोमो ग्रीष्म ऋतुः क्षत्रन्द्रविणम्प्रतीचिमारोह ।3।**

**ॐ प्रतीचिमारोह जगती त्वाऽअवतु। वैरूपꣳसाम सप्तदशस्तोमो वर्षा ऋतु विड्द्रविणमुदीचीमारोह ।4।**

**ॐ उदीचीमारोहानुष्टुप्त्वाऽअवतु। वैराजꣳसामैकविꣳशस्स्तोमः शरदृतु फलन्द्रविणमूर्ध्वमारोह ।5।',**

4. **'सदसस्पतिनोद्धरणं'** अर्थात्सदसस्पति इत्यादि मन्त्र से उद्धरणसंस्कार करे।

**'उद्धृत्य'**- इति सूत्रम्। **'पांसूनुद्धृत्य क्षिपेत्'**- इति व्याख्या। इस संस्कार को इस प्रकार करना है। **'अनामिकांगुष्ठाभ्यां यथोल्लिखिताभ्यो लेखाभ्यः पांसूनुद्धृत्य'** अर्थात् अनामिका और अंगूठे से अभी बनायी गयी रेखाओं के बीच में से थोड़ी धूल (मिट्टी) को निकालें। मन्त्र इस प्रकार हैं-

**'ॐ सदसस्पतिमद्भुतम्प्रियमिन्द्रस्य काम्यम्। सनिम्मेधा मयासिषꣳस्वाहा।'**

स्रुवा से थोड़ी मिट्टी को उद्धृत कर अनामिका और अंगूठा से ईशानदिशा में फेंके। फेंकते वक्त इस मन्त्र को बोलें-

**'ॐ व्रतङ्कृणु व्रतङ्कृणुताग्निर्ब्रह्माग्निर्यज्ञो वनस्पतिर्यज्ञीयः दैवीं धियम्मनामहे सुमृडीकामभिष्टये वर्चोधां यज्ञ वाहसꣳ-सुतीर्थानोऽअसद्वशे। ये देवा मनो जाता मनो युजो दक्षक्रतवस्ते नोऽअवन्तु ते नः पान्तु तेभ्यः स्वाहा।।'',**

5. **शन्नो देवेत्यभ्युक्षणम्** अर्थात् शन्नो इत्यादि मंत्र से अभ्युक्षण संस्कार करें-

**'अभ्युक्ष्य'**- इति सूत्रम्। **'अभ्युक्षणमभिषेचनञ्च कुर्यात्'**- इति व्याख्या। इस संस्कार को इस प्रकार करना है- **'मणिकाद्भिरभ्युक्ष्याभिषिच्य'** यानि मणिका युक्त जल से अभ्युक्षण और अभिषेक करें।' क्योंकि कहा है-

**'आपो देव गणाः सर्वे आपः पितृगणाः स्मृताः। तेनैवाभ्युक्षणं प्रोक्तमृषिभिर्वेदवादिभिः** ।1।

**उत्तानेन तु हस्तेन कर्त्तव्यं प्रोक्षणं बुधैः। अवाचीनेन हस्तेन कर्त्तव्यं तदवेक्षणम्** ।2।

**मुष्टिकृतेन हस्तेन चाभ्युक्षणमुदाहृतम्** ।3।

अर्थात् देवगण जल ही हैं, पितृगण जल ही हैं, इसलिये जल से ही अभ्युक्षण और अभिषेक करना चाहिये ऐसे वेदवादी ऋषियों ने कहा है। किस कर्म में जल का प्रयोग कैसे करें? बुद्धिमान प्रोक्षण कर्म को सदा ऊंचे हाथ से करें, नीचे की ओर हाथ करके जल का अवेक्षण करें और अभ्युक्षण कर्म केलिये हाथ में जल लेकर मुट्ठी बांधके जल को हवन कुण्ड में डालें। मन्त्र इस प्रकार हैं-

**'शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये। शंय्योरभिस्रवन्तु नः।।'**

इस प्रकार पांच भूसंस्कारों को करके स्वस्ति वाचन करें। तत्पश्चात् अग्नि को उत्पन्न करें।

अग्नि को उत्पन्न करने अथवा लाने की विधिः- कर्मप्रयोगरत्न में कहा है कि-

**'उत्तमोऽरणिजन्योऽग्निर्मध्यमः सूर्यकान्तजः। उत्तमः श्रोत्रियागारन्मध्यमः स्वगृहादिजः।'**

अर्थात् विभिन्न साधनों से उत्पन्न की जानेवाली अग्नियों में से अरणिमन्थन से उत्पन्न अग्नि श्रेष्ठ है और सूर्यकान्तमणि (अथवा लेन्स) से उत्पन्न अग्नि मध्यम है, शेष निकृष्ट हैं। यदि अग्नि को रसोई आदि अन्यस्थान से यज्ञकुण्ड में लाना है तो श्रोत्रिय के घर की हो तो श्रेष्ठ और अपने घर की हो तो मध्यम, शेष निकृष्ट है।

अग्नि लाने में पात्र आदि का नियम-

**'शुभं पात्रं तु कांस्यं स्यात्तेनाग्निं प्रणयेद्बुधः। तस्याभावे शरावेण नवेनापि दृढेन च।'**

अर्थात् कांस्य का बर्तन श्रेष्ठ है और वह उपलब्ध न हो तो नये व दृढ मिट्टी के बर्तन में ला सकते हैं।

**'पात्रेण पिहिते पात्रे वह्निमेवानयेत्ततः। अस्त्रेणादाय तत्पात्रं वर्मणोद्घाटयेत्तु तं।।**

**अस्त्रमन्त्रेण नैर्ऋत्ये क्रव्यादांशं ततस्त्यजेत्। मूलेन पुरतो धृत्वा संस्कारांश्च ततश्चरेत्।'**

अर्थात् कभी भी अग्नि को खुला न लायें अपितु दूसरे पात्र से ढ़ककर लायें। अस्त्रमन्त्र से लायें और यज्ञमण्डप में लाने के बाद वर्ममन्त्र से उसे खोलें। अस्त्रमन्त्र से ही क्रव्यादांश के रूप में थोड़े अंगारे को नैर्ऋत्य दिशा में फेंकें तत्पश्चात् अपने सामने रखी हुयी अग्नि की पूजा करके संस्कारों को करें। विष्णुधर्मोत्तरपुराण में अग्नि की पूजा के विषय में कहा है कि-

**'मध्येऽपि गन्धपुष्पादीन्दद्यादग्नेर्न संशयः। बहिर्नैवेद्यमात्रन्तु दातव्यमिति निश्चयः।'**

पंचोपचार पूजा में जो गन्ध पुष्प आदि अर्पण करते हैं उन्हें अग्नि के मध्य में ही डालें किन्तु केवल नैवेद्य को बाहर रखके अर्पण करें।

**अथ कुशकण्डिका विचारः**

**'अग्निमुपसमाधाय'** ऐसा बोलकर कर्म के साधनभूत लौकिक अथवा स्मार्त अथवा श्रौत अग्नि को अपने सामने रखकर अग्नि की सात जिह्वाओं के नाम बोलें –

**'याभिर्हव्यं समश्नाति हुतं सम्यग्द्विजोत्तमैः। काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा।1।**
**स्फुलिंगिनी विश्वरुची च देवी लेलायमाना इति सप्त जिह्वाः। एताश्चोक्ता विशेषेण ज्ञातव्या ब्राह्मणेन तु।2।**
**आहूय चैव होतव्यो यो यत्र विहितो विधिः। अविदित्वा तु यो ह्यग्निं होमयेदविचक्षणः।3।**
**न हुतं न च संस्कारो न तु यज्ञफलं भवेत्।4।'**

ग्रहहोम में भी हवन करते वक्त ध्यान देने योग्य बात यह है कि ग्रह के अनुसार अग्नि के नाम अलग-अलग होने से जिस ग्रह को उद्देश्य कर आहुति देनी है उसकी अग्नि का नाम स्मरण कर आहुति देनी चाहिये। उनके नाम स्कन्दपुराण में इस प्रकार बताये है –

**'आदित्ये कपिलो नाम पिंगलः सोम उच्यते। धूमकेतुस्तथा भौमे जाठरोऽग्निर्बुधे स्मृतः।1।**
**गुरौ चैव शिखी नाम शुक्रे भवति हाटकः। शनैश्चरे महातेजा राहुकेत्वोर्हुताशनः।2।'**

अर्थात् सूर्य की आहुति को कपिल नाम की अग्नि में डालना है यानी सामने में विद्यमान अग्नि में भावना करें कि 'यह कपिल नाम की अग्नि है'। इसी प्रकार अन्य ग्रहों के विषय में भी भावना करें। चन्द्र – पिंगल, मंगल – धूमकेतु, बुध – जाठर, गुरु – शिखी, शुक्र – हाटक, शनि – महातेजा, राहु और केतु (दोनों केलिये) हुताशन। पूर्वादि क्रम से आठों दिशाओं में पूजन करे।

पूर्वे – **'ॐ पृथिव्याः सधस्थादग्निम्पुरो यमङ्िरस्वदच्छेमोऽअग्निम्पुरी यमङ्िरस्वद्भरिष्यामः।'**

दक्षिणे – **'ॐ अग्निश्च पृथिवी च सन्नते ते मे सन्नमतामदो वायुश्चान्तरिक्षश्च सन्नते ते मे सन्नमदामदऽआदित्यश्च द्यौश्च सन्नते ते मे सन्नमदामदऽआपश्च वरुणश्च सन्नते ते मे सन्नमदामदः सप्तसथ्ठसदोऽष्टमीभूत साधनी सकामाँ।'**

पश्चिमे – 'ॐ वायो ये ते सहस्रिणो रथासस्तेभिरागाहि। नियुत्वान्त्सोम पीतये।'
उत्तरे – 'ॐ सोमो धेनुꣳसोमोऽर्वन्तमासुꣳसोमो वीरङ्कर्मण्यन्ददाति। सादन्यं विदथ्यꣳसभेयम्पितृश्रवणं यो ददाशदस्मै।'
आग्नेये – 'ॐ अग्निन्दूतम्पुरोदधे हव्यवाहमुपब्रुवे। देवा2आसादयादिह।'
नैर्ऋत्ये – 'ॐ कयानश्चित्रऽआभुवदूती सदा वृधः सखा। कया शचिष्ठया वृता।'
वायव्ये – 'ॐ वायुरनिलममृतमथेदम्भस्मान्तꣳशरीरम्। ॐ क्रतो3 स्मर क्लिवे3 स्मर कृतꣳस्मर।'
ईशान्ये – 'ॐ ईशावास्यमिदꣳसर्वं यत्किञ्च जगत्याञ्जगत्। तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम्।'

अब मध्य में तीन मन्त्रों से पूजन करें –

'ॐ सूर्यरश्मिर्हरिकेशः पुरस्तात्सविता ज्योतिरुदयाऽअजस्रम्। तस्य पूषा प्रसवे याति विद्वान्सम्पश्यन्विश्वा भुवनानि गोपाः।1।
ॐ प्रजापते नत्त्वदेतान्यन्यो विश्वा रूपाणि परिता बभूव। यत्कामास्ते जुहुमस्तन्नोऽअस्तु वयꣳस्याम पतयो रयीणाम्।2।
ॐ सदसस्पतिमद्भुतम्प्रियमिन्द्रस्य काम्यम्। सनिम्मेधा मयासिषꣳस्वाहा।3।'

अब लकड़ियों (ईन्धन) का शोधन करें – 'कस्त्वा सत्यो मदानामꣳहिष्ठोमत्सदन्धसः दृढा चिदारुजे वसु।'

लकड़ियों को अग्नि पर स्थापित करे – 'ॐ त्वामिद्धि हवामहे सा तौ वाजस्य कारवः। त्वां वृत्रेष्विन्द्रसत्पतिन्नरस्त्वां काष्ठा सर्वतः।'

अब अग्नि को शुद्ध करें –

'ॐ अग्नावग्निश्चरति प्रविष्टाऽऋषीणाम्पुत्रोऽभिशास्ति पावा। स नः स्योनः सुयजा यजे ह देवेभ्यो हव्यꣳसदमप्रयच्छन्स्वाहा।'

अग्नि को ग्रहण (स्वीकार) करें – 'ॐ मयि गृह्णाम्यग्ने अग्निꣳरायस्पोषाय सुप्रजास्त्वाय सुवीर्याय। मामु देवताः सचन्ताम्।'

अब अग्नि के गर्भाधान से विवाह पर्यन्त संस्कार करें –

1. गर्भाधानम्:– 'ॐ गर्भोऽअस्योषधीनां गर्भो वनस्पतीनाम्। गर्भो विश्वस्य भूतस्याग्ने गर्भोऽअपामसि।'

2. पुंसवनम्ः- 'ॐ विवस्वान्नादित्यैष ते सोमपीथस्तस्मिन्मत्स्व श्रद्धस्मै नरो वचसे दधातन यदाशीर्दा दम्पती वामश्नुतः। पुमान्पुत्रो जायते विन्दतेव स्वधा विश्वा हारपऽएधते गृहे।'

3. सीमन्तोन्नयनम्ः- 'ॐ अजीजनो हि पवमानसूर्य विधारे शक्मना पयः। गोजीरयारꣳहमानः पुरन्ध्या।'

4. जातकर्मः- 'ॐ एजतु दशमास्यो गर्भो जरायुणा सह यथायं वायुरेजति यथा समुद्र एजति। एवायन्दशमास्यो अस्रज्जरायुणा सह।'

5. नामकरणम्ः- 'ॐ यदापि पेषमातरम्पुत्रः प्रमुदितौधयन्। एतत्तदग्नेऽअनृणो भवाम्यहतौ पितरौ मया। सम्पृचस्स्थ सभ्या भद्रेण पृङ्क्तो विपृचस्स्थविमा पाप्मना पृङ्क्त।'

6. निष्क्रमणम्ः- 'ॐ पूषा पञ्चाक्षरेण पञ्चदिशऽउदजयत्ताऽउज्जेषꣳसविता षडक्षरेण षड्तूनुदजयत्तानुज्जेषम्-बृहस्पतिरष्टाक्षरेण गायत्रीमुज्जेषाम्मित्रो नवाक्षरेण।'

7. अन्नप्राशनम्ः- 'ॐ अन्नपतेऽअन्नस्य नो देह्यनमीवस्य शुष्मिणः। प्रप्प्रदातारं तारिषऽऊर्जन्नो धेहि द्विपदे चतुष्पदे।'

8. चूडाकरणम्ः- 'ॐ अग्नऽऽआयाहि वीतये गृणानो हव्यदातये। निहोता सत्सि बर्हिषि।'

9. कर्णवेधः:- 'ॐ भद्रं कर्णेभिः श्रृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहि देवहितं यदायुः।'

10. उपनयनम्ः- 'ॐ अग्निरेकाक्षरेण प्राणमुदजयन्तामुज्जेषमश्विनो द्व्यक्षरेण द्विपदो मनुष्यानुदजयन्तानुज्जेषं विष्णुस्त्र्यक्षरेण त्रीँल्लोकानुदजयन्तामुज्जेषꣳसोमश्चतुरक्षरेण चतुष्पदः पशूनुज्जेषां पञ्चाक्षरेण।'

11. गायत्रीश्रवणम्ः- 'ॐ भूर्भुवःस्वः वैश्वानराय विद्महे सप्तजिह्वाय धीमहि। तन्नोऽअग्निः प्रचोदयात्।'

12. समावर्तनम्ः- 'ॐ व्रतङ्कृणु व्रतङ्कृणुताग्निर्ब्रह्माग्निर्यज्ञो वनस्पतिर्यज्ञीयः दैवीं धियम्मनामहे सुमृडीकामभिष्टये वर्चोधां यज्ञ वाहसꣳसुतीर्थानोऽअसद्वशे। ये देवा मनो जाता मनो युजो दक्षक्रतवस्ते नोऽअवन्तु ते नः पान्तु तेभ्यः स्वाहा।

13. गोदानकर्मः- '**ॐ गावऽउपावतावतम्मही यज्ञस्य रप्सुदा। उभा कर्णा हिरण्यया।**'

14. विवाहकर्मः- '**ॐ भग एव भगवाँ2। अस्तु देवास्तेन वयं भगवन्तः स्याम। तत्त्वा भग सर्व ईज्जोहवीति स नो भग पुर एता भवेह।**'

तत्पश्चात् अग्नि को हवनकुण्ड में/स्थण्डिल पर ले जाये -

'**ॐ ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिम्। अजस्रङ्घर्म मीमहे। उपयाम गृहीतोऽअसि वैश्वानराय त्वैष ते योनिर्वैश्वा - नराय त्वा। ॐ वैश्वानरो न ऊतय आ प्रयातु परवतः। अग्निरुक्थेन वाहसा। उपयाम गृहीतोऽअसि वैश्वानराय त्वैषते योनिर्वैश्वानराय त्वा।**' तत्पश्चात् अग्नि को हवनकुण्ड में/स्थण्डिल पर स्थापित करें-

'**ॐ अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्याऽअयम्। अपाꣳरेताꣳसि जिन्वति।**'

शोधित समिधाओं से अग्नि को प्रदीप्त यानि तेज करें -

'**ॐ स्थिरो भव वीड्वङ्ग आशुर्भव वाज्ज्यर्वन्। पृथुर्भवसुषदस्त्वमग्नेः पुरीषवाहनः।**'

अब अग्नि से प्रार्थना करें -

'**ॐ आवाहये पुरुषम्महान्तं सुरासुरैर्वन्दितपादपद्मम्। ब्रह्मादयो यस्य मुखे विशन्ति प्रविश कुण्डे सुरलोकनाथ।**'

अब अग्नि के समक्ष आवाहनादि मुद्रा दर्शायें -

'**भो अग्ने त्वमावाहितो भव। भो अग्ने त्वं संस्थापितो भव। भो अग्ने त्वं सन्निहितो भव।**
**भो अग्ने त्वं सन्निरुद्धो भव। भो अग्ने त्वं सकलीकृतो भव। भो अग्ने त्वमवगुण्ठितो भव।**
**भो अग्ने त्वममृतीकृतो भव। भो अग्ने त्वं परमीकृतो भव।**'

अग्नि का ध्यान करें -

'**ॐ चत्वारि शृंगास्त्रयोऽस्य पादा द्वे शीर्षे सप्त हस्तासोऽअस्य।**

त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यॉं2ऽआविवेश।।1।।

रुद्रतेजःसमुद्भूतं द्विमूर्धानं द्विनासिकम्। षण्णेत्रं च चतुःश्रोत्रं त्रिपादं सप्तहस्तकम्।

याम्यभागे चतुर्हस्तं सव्यभागे त्रिहस्तकम्। स्रुवं स्रुचं च शक्तिं च ह्यक्षमालां च दक्षिणे।।2।।

तोमरं व्यजनं चैव घृतपात्रं च वामके। बिभ्रतं सप्तभिर्हस्तैर्द्विमुखं सप्तजिह्वकम्।।3।।

याम्यायने चतुर्जिह्वं त्रिजिह्वं चोत्तरे मुखम्। द्वादशकोटिमूर्त्याख्यं द्विपंचाशत्कलायुतम्।।4।।

आत्माभिमुखमासीनं ध्यायेच्चैव हुताशनम्। गोत्रमग्नेस्तु शाण्डिल्यं शाण्डिल्यासितदेवलाः।।5।।

त्रयोऽमी प्रवरा माता त्वरणी वरुणः पिता। रक्तमाल्याम्बरधरं रक्तपद्मासनस्थितम्।।6।।

स्वाहास्वधावषट्कारैरंकितं मेषवाहनम्। शतमंगलनामानं वह्निमावाहयाम्यहम्।।7।।

त्वं मुखं सर्वदेवानां सप्तार्चिरमितद्युते। आगच्छ भगवन्नग्ने कुण्डेऽस्मिन्सन्निधो भव।।8।।

भो वैश्वानर शाण्डिल्यगोत्र शाण्डिल्यासितदेवलप्रवरान्वित भूमिमातः वरुणपितः मेषध्वज प्राङ्मुख मम सम्मुखो भव।।

अब प्रतिष्ठित करें –

'ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञं समिमन्दधातु। विश्वेदेवासऽइह मादयन्मों3 प्रतिष्ठ।।

ॐ शतमंगलनामाग्ने सुप्रतिष्ठितो वरदो भव।।'

कुण्ड के मध्य अथवा नैर्ऋत्य में अग्नि की पूजा करें –

'ॐ भूर्भुवःस्वः शतमंगलनाम्ने वैश्वानराय नमः, सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि।।'

पुनः प्रार्थना करें –

'अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनं। हिरण्यवर्णममलं समिद्धं विश्वतोमुखम्।।'

अग्नि के (अंगभूतकर्म सहित) संस्कार :-

पारस्कर सूत्रों के आधार पर यहां अंगभूत कर्म और संस्कारों का विधान बताया जा रहा है।

1. '**दक्षिणतो ब्रह्मासनमास्तीर्य**' इस सूत्र के अनुसार अग्नि के दक्षिण दिशा में यज्ञीय लकडी से बनी हुयी पीठ के ऊपर कुशा का आसन बिछायें – '**ॐ हिरण्यगर्भ समवर्ततताग्रे भूतस्य जातः पतिरेक आसीत्। स दाधार पृथिवीन्द्यामुतेमां कस्मै देवाय हविषा विधेम।**' और उस पर जिस कर्मज्ञाता चतुर्वेदी श्रोत्रिय ब्राह्मण को ब्रह्मा नामक ऋत्विक् के कर्म केलिये वरण किये थे उन्हें बिठायें। '**ॐ आब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामाराष्ट्रे राजन्यः। शूरऽइषव्योऽतिव्याधी माहारथो जायतान्दोग्ध्रीर्धेनु वोढानड्वानाशुः सप्तिः पुरन्धिर्योषा विष्णुरथेष्ठाः सभे ये युवास्य यजमानस्य वीरो जायतान्निकामे नः कल्पताम्।**' ब्रह्मासन के समीप में यजमान का आसन बिछायें– '**ॐ अग्ने प्रेहि प्रथमो देवयताञ्चक्षुर्देवानामुत मर्त्यानाम्। इत क्षमाण भृगुभिः सजोषा स्वर्प्यन्तु यजमाना स्वस्ति।**' अग्नि के उत्तरदिशा में प्रणीतापात्र केलिये प्रागग्रकुशाओं का आसन बिछायें और प्रणीता आसन व अग्नि के बीच में प्रोक्षणीपात्र केलिये प्रागग्र कुशाओं का आसन बिछायें- '**ॐ परीत्यभूतानि परीत्यलोकान् परीत्यसर्वाः प्रदिशो दिशश्च। उपस्थाय प्रथमजामृतस्यात्व -मनात्कमानमभिसंविवेश।**', ब्रह्मा से प्रणीतापात्र का प्रणयन केलिये अनुमति लें – '**ब्रह्मन् अपः प्रणेष्यामि**', ब्रह्माजी कहें – '**ॐ प्रणय**', बायें हाथ में प्रणीता पात्र को धारण कर उसमें दाहिने हाथ से जल भरके वायव्यकोण में पहले प्रथम आसन पर रखकर दाहिने हाथ का अनामिका से आलभन कर दूसरे आसन पर रखें।

2. '**प्रणीय**' (अप इति शेषः) अर्थात् अग्नि के उत्तर दिशा में पूर्वाग्र कुशाओं के दो आसन बिछायें। बायें हाथ में यज्ञीय लकड़ी से बना हुआ 12 अंगुल लम्बा 4 अंगुल चौडा और 4 अंगुल गहरा चमस पात्र रखकर उसमें दाहिने हाथ से उद्धृतपात्रस्थ जल को भरें। जल भरने का मन्त्र – '**ॐ उदुत्तमं वरुणपाशमस्मदवाधमं विमद्ध्यमꣳश्रथाय। अथावयमादित्यव्रते तवानागसो अदितये स्याम।1। ॐ तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेहवोद्ध्युरूशꣳसमान आयुः प्रमोषीः।2।**' बायें हाथ

से दाहिने हाथ में ग्रहण करे – '**ॐ इन्द्र आसान्नेता बृहस्पतिर्दक्षिणा यज्ञः पुरऽएतु सोमः। देवसेनानामभिभञ्जतीनाम्मरुतो यन्त्वग्रयम्।**' उस चमस पात्र को पहले पश्चिम आसन पर रखकर आलभन करने के बाद पूर्व आसन पर स्थापित करें।,

3. '**परिस्तीर्य**' अर्थात् एक मुष्टि पूर्वाग्र सोलह बर्हि लेकर ईशानादि से उत्तर तक अग्नि के चारों तरफ (प्रत्येक दिशा में 4 बर्हि) यज्ञकुण्ड की मेखला के नीचे बिछायें। परिस्तरण कर्म इस मन्त्र से करे – '**ॐ ये ते शतं वरुण ये सहस्रं यज्ञीयाः पाशा वितता महान्तः। तेभिर्नो अद्य सवितोदविष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा।**',

4. '**अर्थवदासाद्य**' अर्थात् जितनी सामग्री है उसी के अनुसार अग्नि के उत्तर अथवा पश्चिम दिशा में (प्रयोग करने में अपनी अनुकूलता को देखकर) पात्रासादन करें। तत्र क्रमः – "**पवित्रछेदनार्थं त्रयो दर्भाः साग्रे अनन्तगर्भे पवित्रे द्वे, प्रोक्षणीपात्रं, आज्यं, आज्यस्थाली, चरुस्थाली, त्रिप्रक्षालिता तण्डुला, सम्मार्जनकुशाः पंच, उपयमनकुशाः सप्त, समिधस्तिस्रः, स्रुवः, स्रुक्, पूर्णपात्रं, अन्यान्युप कल्पनीयानि अर्कादिसमित्तिलादि हवनीयद्रव्याणि निधाय पवित्रे कुर्यात्। द्वयोरुपरि त्रीणि निधाय उपरि प्रादेशमात्रं अवशेषयित्वा दक्षिणकरेण द्वयोः पवित्रयोः मूलेन द्वौ कुशौ प्रदक्षिणीकृत्य वामकरेण सर्वाणि पवित्राणि युगपद्धृत्वा दक्षिणकरांगुष्ठांगुलिपर्वाभ्यां उपरि प्रादेशमात्रं छित्त्वा त्रीण्युत्तरतः क्षिपेत्, द्वे ग्राह्ये।**" अर्थात् पवित्र छेदन केलिये 3 दर्भ, साग्र अनन्तगर्भ पवित्र, दो प्रोक्षणीपात्र, घी, आज्यस्थाली, चरुस्थाली, तीन बार प्रक्षालित चावल, 5 सम्मार्जनकुशा, 7 उपयमनकुशा, 3 समिधा, स्रुवा, स्रुक्, पूर्णपात्र, अन्य उपकल्पित अर्कादिसमिधा सहित तिल आदि हवनीयद्रव्य को रखकर पवित्र निर्माण करें।

5. '**पवित्रे कृत्वा**' इस सूत्र के अनुसार पवित्री का निर्माण करना है जिसका लक्षण है– '**अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च। प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्।**' अर्थात् अन्तर्गर्भित न हो ऐसे अग्र सहित दोदलवाले प्रादेशमात्र लम्बे कुशा से पवित्र को बनाना चाहिये। 2 के ऊपर 3 को रखकर उपरि प्रादेशमात्र को शेष करके दाहिने हाथ से 2 पवित्रों के मूल से 2 कुशाओं की प्रदक्षिणा लगाकर

बायें हाथ से सभी को एक साथ धारणकर दाहिने हाथ के अंगुष्ठ व अंगुलि से ऊपर के प्रादेशमात्र काटें। कुशाओं को प्रादेशमात्र काटने केलिये इस मन्त्र का प्रयोग किया जाता है – **'ॐ त्र्यम्बकं यजामहे सुगन्धिम्पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात्**।1। **ॐ त्र्यम्बकं यजामहे सुगन्धिम्पति वेदनम्। उर्वारुकमिव बन्धनादितो मुक्षीय मामुतः**।2।' प्रादेशमात्र कुशाओं का छेदनकर 3 को उत्तर दिशा में फेंके और 2 को ग्रहण करें। कुशाओं से पवित्र को बनाते वक्त इस मन्त्र का पाठ करे – **'ॐ पवित्रेस्थो वैष्णव्यो सवितुर्वः प्रसव। उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः**।1। **देवीरापो अग्रेगुवो अग्रपुवो अग्र इममद्य। यज्ञन्नयताग्रे यज्ञपतिं सुधातुम्यज्ञपतिन्देव युवम्**।2।' तत्पश्चात् प्रणीता आदि पात्रों को ढके– **'ॐ तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेहवोद्ध्युरूशꣳसमान आयुः प्रमोषीः।'**,

6. प्रोक्षणीपात्र– **'वारणं पाणिपात्रं च द्वादशांगुलविस्तृतम्। पद्मपत्राकृतिर्वापि प्रोक्षणीपात्रमीरितम्।'** अर्थात् यज्ञीय लकड़ी से निर्मित 12 अंगुलवाला पाणिपात्र अथवा कमल के पत्ते के आकार में बनाये हुये पात्र को प्रोक्षणीपात्र कहा गया है। इस मन्त्र से प्रोक्षणीपात्र को ग्रहण करें इस मन्त्र से– **'ॐ इदम्मे वरुण श्रुधीहवमद्या च मृडय। त्वामवस्युराचके।'** अब दो पवित्र को प्रोक्षणीपात्र में डाले – **'ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम्। अग्नये जुष्टं गृह्णामि।'**

7. आज्यस्थाली – **'आज्यस्थाली कांस्यमयी यद्वा ताम्रमयी तथा। प्रादेशमात्रदीर्घा सा ग्रहीतव्याऽव्रणा शुभा।'** अर्थात् प्रादेशमात्र नाप के कांसे की अथवा तांबे की आज्यस्थाली ग्रहण करनी चाहिये और वह चोट, छेद, दाग आदि से रहित होनी चाहिये। आज्यस्थाली ग्रहण करने मा मन्त्र– **'ॐ घृतवती भुवनानामभिश्रियोर्वी पृथ्वीमदुधुघे सुपेशसा। द्यावापृथिवी वरुणस्य घर्मणा विष्वग्भिस्तेऽजरे भूरि रेतसा।'**

8. चरुस्थाली– **'दृढा प्रादेशमात्रोर्ध्व तिर्यङ्नातिबृहन्मुखी। मृन्मयौदुम्बरी वापि चरुस्थाली प्रशस्यते।'** अर्थात् मजबूत व प्रादेशमात्र ऊंची मिट्टी से बनी अथवा गूलर की लकड़ी से बनी हुयी पात्र को चरुस्थाली के रूप में ग्रहण करना चाहिये और वह टेढी–मेढी न हो व बड़े

मुंहवाली भी न हो। चरुस्थाली ग्रहण करने का मन्त्र- **'ॐ अन्नपतेऽअन्नस्य नो देह्यनमीवस्य शुष्मिणः। प्रप्रदातारं तारिषऽऊर्जन्नो धेहि। द्विपदे शं चतुष्पदे।'**

9. स्रुवा का लक्षण- **'खादिरादेः स्रुवः कार्यो हस्तमात्रप्रमाणतः। अंगुष्ठपर्वखातं तत् त्रिभागं दीर्घपुष्करम्।।'** अर्थात् खैर आदि यज्ञीयवृक्षों की लकडी से बना हुआ एक हाथ लम्बा, त्रिकोणात्मक (गोल नहीं) अंगूठे के बराबर गहरा किन्तु उसके पुष्कर लम्बे हों ऐसा स्रुवा ही कर्म में प्रयोग करना चाहिये। स्रुवा ग्रहण करने का मन्त्र- **'ॐ स्रुचश्च मे चमसा च मे वायव्यानि च मे द्रोणकलशश्च मे ग्रावाणश्च मे धिषवणे च मे पूतभृच्च मऽआधवनीयश्च मे वेदिश्च मे बर्हिश्च मेऽअवभृतश्च मे स्वाहाकारश्च मे यज्ञेन कल्पन्ताम्'**

10. स्रुवसंमार्जनकुशा और उपयमनकुशा - **'स्रुवसंमार्जनार्थाय पंच वाथ त्रयोऽपि वा। प्रादेशमात्रान्गृह्णीयात्संमार्जकुशसंज्ञकान्।। उपयमनकुशाः सप्त पंच वाथ त्रयोऽपि वा।'** अर्थात् स्रुवा को साफ करने केलिये संमार्जनकुशा नाम से प्रादेशमात्र लम्बे पांच अथवा तीन कुशा ग्रहण करें और उपयमनकर्म (स्रुवा पर बांधने केलिये) सात अथवा पांच अथवा तीन कुशा ग्रहण करें।

सम्मार्जनकुशा ग्रहण करने का मन्त्र - **'ॐ शादन्दद्भिरवकान्दन्तमूलैर्मृदं वैस्तेमदुꣳष्ठाभ्याꣳसरस्वत्याऽअग्रजिह्वाया-ऽउत्सादमवक्त्रन्दैनतालु वाजꣳ हनुभ्यामपऽ आश्येनवृषणमण्डाभ्यामादित्याँ। श्मश्रुभिः पन्थानम्भ्रूभ्या द्यावापृथिवीवर्तोभ्यां विद्युतङ्कनीनकाभ्याꣳशुक्लाय स्वाहा कृष्णाय स्वाहा पार्याणि पक्ष्माणि पार्या इक्षवः।'**

11. उपयमनकुशा ग्रहण करने का मन्त्र - **'उपयाम गृहीतोऽस्यन्तर्यच्छ मघवन्पाहि सोमम्। उरु यरायऽएषो यजस्व।'** सम्मार्जनीकुशाओं द्वारा प्रणीतापात्रस्थ जल से स्रुवा का प्रोक्षण करें (कुशा के अग्र से स्रुवा के अग्र का, मध्य से मध्य का और मूल से मूल का शोधन करें) - **'ॐ प्रत्युष्टꣳरक्षः प्रत्युष्टाऽअरातयो निष्टप्तꣳरक्षो निष्टप्ताऽअरातयः। उर्वन्तरिक्षमन्वैमि।'**

12. समिधा के वृक्ष – ब्रह्मपुराण में समिधा के वृक्षों के बारे में कहा है – **'शमीपलाशन्यग्रोधप्लक्षवैकंकतोद्भवः** ।1। **अश्वत्थोदुम्बरौ बिल्वश्चन्दनस्सरलस्तथा। सालश्च देवदारुश्च खदिरश्चैव यज्ञीयाः** ।2।' अर्थात् याग में इन वृक्षों की ही लकड़ी प्रयोग करने योग्य हैं – शमी, पलाश, वट, वैकंकती, पीपल, गूलर, बेल, चन्दन, चीड़, साल, देवदारु और खैर।

समिधा का लक्षण – **'नांगुष्ठादधिका ग्राह्या समित्स्थूलतया क्वचित्। न वियुक्ता त्वचा चैव न सकीटा न पाटिता** ।1। **प्रादेशान्नाधिका नोना न तथा स्याद् द्विशाखिका। न सपर्णा न निर्वीर्या होमेषु च विजानता** ।2।' अर्थात् अंगूठे से ज्यादा मोटी न हो, त्वचा रहित न हो, कीडे युक्त न हो, फटी न हो, दो शाखा युक्त न हो, पत्तों से युक्त न हो, वीर्य रहित न हो और प्रादेशमात्र से न ज्यादा लम्बी हो व न छोटी ही हो, ऐसी समिधा के योग्य पूर्वोक्त पवित्र वृक्षों की टहनियों से बनी समिधा ही हवन/याग में प्रयोग करें।

समिधा को ग्रहण करने का मन्त्र – **'ॐ समिधग्निन्दुवस्यत घृतैर्वोधयतातिथिम्। अस्मिन्हव्या जुहोतन।।'**

13. आज्य विचारः – **'उत्तमं गोघृतं प्रोक्तं मध्यमं महिषीभवं। अधमं छागलीजातं तस्माद् गव्यं प्रशस्यते** ।1।' अर्थात् गौ का घी उत्तम है, भैंस का मध्यम और बकरी का अधम, इसलिये गौ का घी ही हवन, पूजा आदि कार्य केलिये सर्वश्रेष्ठ है।

चरुविचारः – **'हविष्येषु यवा मुख्यास्तदनु व्रीहयः स्मृताः। यथोक्तवस्त्वसंपत्तौ ग्राह्यं तदनुकारि यत्** ।1। **यवानामिव गोधूमा व्रीहीणामिव शालयः। अभावे व्रीहियवयोर्दध्ना वा पयसापि वा** ।2।' अर्थात् हवन के योग्य धान्यों में जौ मुख्य है तत्पश्चात् चावल। यदि ये दोनों उपलब्ध न हो तो इनके सदृश क्षेत्रीय धान्य का प्रयोग करें, जैसे कि जौ के सदृश गेहू को और चावल के सदृश स्यांवां चावल को माना गया है। जौ व धान्य तथा गेहूँ व स्यांवां चावल उपलब्ध न हो तो दूध अथवा दही से हवन कर सकते हैं (किन्तु अग्नि बुझने का डर रहता है, अतः क्षेत्रीय द्रव्यविशेष मिलाकर हवन करें।) आज्यपात्र और चरुपात्र ग्रहण करने का मन्त्र – आज्यस्थाली में आज्य भरे और चरुपात्र में चरु भरे – **'ॐ घृताच्यासि जुहूर्नाम्ना सेदम्प्रियेण धाम्ना प्रियꣳसदऽआसीद घृताच्यासि प्रभञ्जन्नाम्ना सेदम्प्रियेण धाम्ना प्रियꣳसदऽआसीद घृताच्यासि ध्रुवाऽसदन्नृतस्य योनौ ता विष्णो पाहि यज्ञम्पाहि यज्ञपतिम्पाहि मां यजन्तम्।।'**

14. पूर्णपात्र विचार– **'अकृते पूर्णपात्रे च छिद्रयज्ञः प्रजायते। पूर्णपात्रे च संपूर्णे सर्वसंपूर्णता भवेत्।।'** अर्थात् पूर्णपात्र न हो तो वह यज्ञ छिद्र युक्त होगा यानि यजमान केलिये हानिकारक होगा। इसके विपरीत यदि पूर्णपात्र संपूर्ण हो तो सब कुछ संपूर्ण होगा यानी यजमान की सकल कामनायें पूर्ण होंगी। पूर्णपात्र ग्रहण करने का मन्त्र – **'ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम्। अग्नीषोमो बाहुभ्यान्त्वा जुष्टन्नियुनज्मि।1। अद्भ्यस्त्वौषधीभ्यो न त्वा मातामन्यतामनुपितानुभ्राता सगर्भ्यो सखा सयूथ्यः अग्नीषोमो बाहुभ्यान्त्वा जुष्टं प्रोक्षामि।2।'**,

15. **'प्रोक्षणीः संस्कृत्य'** अर्थात् प्रोक्षणीपात्र को प्रणीतापात्र के उत्तर में स्थापित कर उसमें दूसरे पात्र से अथवा अपने हाथ से प्रणीतापात्र के जल से सींच कर पवित्रों से उत्पवन करके उन पवित्रों को प्रोक्षणीपात्र में डालें। दाहिने हाथ से प्रोक्षणीपात्र को उठाकर बायें हाथ में रखकर उसके जल को उछालकर प्राणीतापात्र के जल से प्रोक्षण करें।

16. **'अर्थवत्प्रोक्ष्य'** अर्थात् आज्यस्थाली से पूर्णपात्र पर्यन्त सकल पात्रों पर जिस क्रम से उन्हें रखा गया था उसी क्रम से प्रोक्षणीपात्र के जल से प्रोक्षण करके प्रणीतापात्र और अग्नि के बीच में प्रोक्षणीपात्र को रखें।

17. **'निरूप्याज्यम्'** अर्थात् अग्नि के निकट स्थापित आज्यस्थाली में रखे हुये घी में थोड़ा चरु का प्रक्षेप करें और चरुस्थाली में रखे हुये चरु पर प्रणीतापात्र के जल से प्रोक्षण करें।

18. **'अधिश्रित्य'** अर्थात् ब्रह्मा ऋत्विक् (उनके अभाव में अध्वर्यु/होता/यजमान स्वयं) घी का अधिश्रयण कर चरु के साथ थोड़ा घी अग्नि में डालें। **'ॐ शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये। शंय्योरभिस्रवन्तु नः।1।**
**ॐ अनिशितोऽअसि सपत्नक्षिद्वा जिनिन्त्वा वाजेद्धयायै सम्मार्ज्मि।2।'**,

19. **'पर्यग्निं कुर्यात्'** अर्थात् जलते हुये अंगारे से घी और चरु पर प्रदक्षिणा कराके यानि घुमाके अर्धश्रित चरु पर भी घुमायें। इससे

सम्मार्जन कर प्रतपन करे – '**ॐ पुनन्तु मा देवजनाः पुनन्तु मनसा धियः। पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा।।**',

20. '**स्रुवं प्रतप्य संमृज्य**' अर्थात् दाहिने हाथ से स्रुवा को लेकर अधोमुख (उल्टा करके) अग्नि के पश्चिम भाग में पकड़के तपाकर बायें हाथ में पकड़ लें और उस पर संमार्जनी कुशाओं से स्रुवा का शोधन करें। कैसे? कुशा के अग्रभाग से स्रुवा के मूल से शुरुकर अग्र तक स्पर्श करते हुये जायें तथा कुशा के मूल से स्रुवा के अग्र से शुरुकर मूल तक स्पर्श करते जायें। पुनः स्रुवा को तपायें –

'**ॐ तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेहवोद्ध्युरूशꣳसमान आयुः प्रमोषीः।।**'

स्वस्थान में स्थापित करें – '**ॐ तमुत्त्वा दध्यङ् ऋषिः पुत्रऽअथर्वणः। वृत्रहणम्पुरन्दरम्।।**',

21. '**पुनः प्रतप्य निदध्यात्**' अर्थात् पूर्ववत् दोबारा तपाकर अपनी दाहिनी दिशा में रखें। आज्यपात्र को अग्नि की प्रदक्षिणा कराके स्वस्थान में रखें – '**ॐ तेजोऽसि शुक्रमस्यमृतमसि धामनामासि। प्रियन्देवानामनाधृष्टन्देवयजनमसि।।**' चरुस्थाली को भी अग्नि की प्रदक्षिणा कराके स्वस्थान में रखें – '**ॐ पशुभिः पशुनाप्नोति पुरोडाशैर्हविꣳष्या। छन्दोभिः सामिधेनीर्याज्याभिर्वषट्कारान्।।**'

22. '**आज्यमुद्वास्य**' अर्थात् आज्यस्थाली को उठाकर चरु की पूर्व दिशा से लाकर अग्नि की उत्तर दिशा में स्थापित करें और चरुस्थाली को उठाकर आज्यस्थ्थली की पश्चिम दिशा से लाकर आज्यस्थाली के उत्तरदिशा में रखें। आज्य का उत्पवन करें –

'**ॐ प्रत्युष्टꣳरक्षः प्रत्युष्टाऽअरातयो निष्टप्तꣳरक्षो निष्टप्ताऽअरातयः। उर्वन्तरिक्षमन्वैमि।।**',

23. '**उत्पूय**' अर्थात् घी के ऊपर पवित्रीकुशाओं (अथवा अपनी हथेली के माध्यम से) फूंक मारें।

'**ॐ आपवस्व हिरण्यवदस्ववत्सोम वीरवत्। वाजङ्गोमन्तमाभरत्स्वाहा।**',

तत्पश्चात् आज्यावेक्षण करे –

24. '**अवेक्ष्य**' अर्थात् घी को अच्छी तरह देखें (गृहस्थ हो तो पत्नी को घी देखने को कहे) और उसमें कुछ अन्य द्रव्य दीखें तो निकाले।

25. '**कुशानाधाय**' आज्य में कुशा को रखें –

**'ॐ विष्णो रराटमसि विष्णोः श्नप्त्रेस्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोऽसि। वैष्णवमसि विष्णवे त्वा।।'**,

26. '**प्रोक्षणीश्च पूर्ववत्**' अर्थात् प्रोक्षणी पात्र पर भी पूर्ववत् पवित्रीकुशाओं से उत्पवन करें। जलती हुयी कुशा से आज्यपात्र, चरुस्थाली और अग्नि के ऊपर प्रदक्षिणा के क्रम से घुमाकर अग्नि में डालें – **'ॐ धृष्टिरस्यपाग्नेऽअग्निमामादृंहि निष्क्रव्यादꣳसेधा देवयजं वह। ध्रुवमसि पृथिवीदृꣳह ब्रह्मवनित्वा क्षत्रवनि सजात वन्युपदधामि भ्रातृव्यस्य वधाय।।'**,

27. '**उपयमनकुशानादाय**' अर्थात् उपयमनकुशाओं को दाहिने हाथ से लेकर बायीं ओर रखें।

28. '**समिधोऽभ्याधाय**' अर्थात् बैठे हुये समिधा को घी से युक्त कर अग्नि में डालकर अग्नि को आहुतियां डालने के योग्य तेज करें।

29. '**पर्युक्ष्य जुहुयात्**' अर्थात् प्रोक्षणीपात्र के पूरे जल को पवित्री धारण किये हुये दाहिने हाथ के चुल्लु में भरकर ईशान दिशा से आरम्भकर उत्तरदिशा तक घुमाते हुये अग्नि के चारों तरफ सींचें। तत्पश्चात् संस्रव को धारण करने केलिये प्रणीतापात्र और अग्नि के बीच में थोड़ा जल से भरा संस्रवपात्र को स्थापित कर सर्वप्रथम गणाधिपति गणेश भगवान को आहुति देकर आघार आदि पांच वारुणक आहुतियां दें। पांच वारुणक आहुतियों के बारे में त्रिकारिका में कहा है कि –

**'आघारौ नासिके ज्ञेया आज्यभागौ च चक्षुषी। वक्त्रश्चोदरकुक्षी च कटी व्याहृतिभिः स्मृता।1।**

**शिरो हस्तौ च पादौ च पंचवारुणकाः स्मृताः। प्रजापतिः स्विष्टकृतं श्रोत्रे द्वे परिकीर्तिते।2।'**

अर्थात् ऐसी भावना करें की आप आहुतियों से अग्निदेव के शरीर का निर्माण कर रहे हैं। कैसे? दो आघार आहुतियों से दो नासिका, दो आज्यभाग आहुतियों से दो आंख, तीन व्याहृतियों से मुख, पेट का कुक्षी और कटि; पांच वारुणक आहुतियों से एक सिर, 2 हाथ और 2 पैर तथा अन्त में प्रजापति देवता की आहुति और स्विष्टकृत् होम से दो कानों के निर्मित होने की भावना करें।

**5.1.2-2** अथवा **आगमिक विधि** से अग्नि स्थापना करें – रुद्रयामल तन्त्रोक्त देवीरहस्य (11.7-17) के अनुसार आगम पद्धति से अग्नि स्थापना करने की यह विधि है। **'पूर्वस्यां दिशि सद्यन्त्रात्खनेत्कुण्डं त्रिकोणकम्। हस्तैकविस्तृतं चाधो हस्तैकपरिमाणतः।।'** अर्थात् पूर्वदिशा में एक त्रिकोण कुण्ड (अन्य तन्त्र शास्त्र में योनि कुण्ड का भी विधान है।) का खनन करे। वह कुण्ड यजमान के हाथ के अनुसार तीनों भुजायें एक-एक हाथ लम्बा और एक हाथ गहरा होना चाहिये। **'कुण्डेऽस्मिन् विलिखेद्यन्त्रं त्र्यश्रं बिन्दुविराजितम्। षट्कोणमष्टपत्रं च त्रिवृतं भूगृहांकितम्।। ततः पूजां चरेत् देवि कुण्डचक्रस्य पार्वति। यथोक्तविधिना येन साधको दीक्षितो भवेत्।।'** अर्थात् इस त्रिकोण कुण्ड में त्रिकोण बनाकर उसके मध्य में बिन्दु का अंकन करे। उसके बाहर षट्कोण, अष्टदल, तीनवृत्त और भूपुर बनाये। हे पार्वति! कुण्डस्थ चक्र की पूजा साधक अपनी दीक्षा में जिस प्रकार बताया गया है उस विधि के अनुसार ही करे। चित्र संख्या 24 पृष्ठ संख्या 440 देखें। अथवा निम्न सामान्य विधि से करे-

1. **'गणेशधर्मवरुणाः कुबेरसहितास्तथा। चतुर्द्वारेषु सम्पूज्याश्चत्वारो द्वारपालकाः।।'** अर्थात् भूपुर के चारों द्वार पर पूर्वादि क्रम से गणेश, यम, वरुण और कुबेर की आवाहनादि पूर्वक पूजा करे – **'ॐ गं गणेशाय नमः, ॐ यं यमाय नमः, ॐ वं वरुणाय नमः, ॐ कुं कुबेराय नमः।**

2. **'माया च मोहिनी मत्ता माध्वी वह्निवल्लभा। वर्तुली वीरसूर्वाम्या पूज्या अष्टदलस्थिताः।।'** अर्थात् अष्टदल में माया, मोहिनी, मत्ता, माधवी, वह्निवल्लभा, वर्तुली, वीरसू और वाम्या का पूजन करे। **ॐ मां मायायै नमः, ॐ मों मोहिन्यै नमः, ॐ मं मत्तायै नमः, ॐ मां माधव्यै नमः, ॐ वं वह्निवल्लभायै नमः, ॐ वं वर्तुल्यै नमः, ॐ वीं वीरसुवे नमः, ॐ वां वाम्यायै नमः।**

3. **'अम्बालिकाम्बा बगला छिन्नशीर्षाम्बिका भगा। षट्कोणमध्यगाः पूज्याः कुण्डचक्रे महेश्वरि।।'** अर्थात् हे महेश्वरि! कुण्डचक्र में स्थित षट्कोण में अम्बालिका, अम्बा, बगला, छिन्नशीर्षा, अम्बिका और भगा का पूजन करे। **ॐ ह्रीं अम्बालिकायै नमः, ॐ ह्रीं अम्बायै नमः, ॐ ह्रीं बगलायै नमः, ॐ ह्रीं छिन्नशीर्षायै नमः, ॐ ह्रीं अम्बिकायै नमः, ॐ ह्रीं भगायै नमः।**

4. **'वह्निं वैश्वानरं चाग्निं त्रिकोणे पूजयेच्छिवे। स्वाहाभगवतीं बिन्दौ जातवेदसमर्चयेत्।।'** अर्थात् हे शिवे! त्रिकोण में वह्नि, वैश्वानर और अग्नि की पूजा करे। **ॐ वह्नयै नमः, ॐ वैश्वानराय नमः, ॐ अग्नये नमः**। तथा बिन्दु में स्वाहा और जातवेद की पूजा करे। **ॐ स्वाहायै नमः, ॐ जातवेदसे नमः**।

5. **'अग्निं मूलेन देवेशि वह्नेर्दशकलास्ततः। तारं वह्निः शिवोऽब्धिश्च हृज्जं शक्तिर्महेश्वरि।।** अर्थात् हे देवेशि! हे महेश्वरि! बिन्दु में ही अग्नि की दस कलाओं का पूजन करे। **ॐ यं धूम्रार्चिषे नमः, ॐ रं ऊष्मायै नमः, ॐ लं ज्वलिन्यै नमः, ॐ वं ज्वालिन्यै नमः, ॐ शं विस्फुलिंगिन्यै नमः, ॐ षं सुश्रियै नमः, ॐ सं सुरूपायै नमः, ॐ हं कपिलायै नमः, ॐ ळं हव्यवाहिन्यै नमः, ॐ क्षं कव्यवाहिन्यै नमः**।

6. संपूर्ण चक्रका पूजन निम्न मन्त्र से करे – **'अग्रे वैश्वानरं ब्रूयाज्जटाभारेति संवदेत्। भास्वरेति त्रिनेत्रेति ज्वालामुखपदं वदेत्।। प्रज्वलेति युगं ब्रूयात्जातवेदसि संवदेत्। संवेदने च ठद्वयं मन्त्रोऽयं वह्निवल्लभः।।'** अर्थात् अग्नि का यह प्रिय मूलमन्त्र है **'ॐ रं गं रूं जं सौः अग्ने वैश्वानर जटाभार भास्वर त्रिनेत्र ज्वालामुख प्रज्वल प्रज्वल जातवेद ठः ठः स्वाहा/नमः**। अब कुण्डस्थ चक्र का पूजन इसी मन्त्र से गन्धाक्षतपुष्पादि से करे। आवाहनादि समस्त उपचारों को भी इसी मन्त्र से करे। **'ततो दिग्भैरवान् भूतानर्चयेत् कुसुमैः परम्। ततो देवि प्रमथ्याग्निं कुण्डचक्रे कुलेश्वरि।। बिन्दौ वह्निं समावाह्य मूलेनोज्ज्वालयेच्छिवे। अग्निं संदीप्य मूलेन प्रणमेद्वह्निमुद्रया।। मूलेनाहुतिभिर्वह्निं हुनेत् षोडशभिस्ततः। अष्टोत्तरशतावृत्त्या दद्यदाज्येन पार्वति।।'** अर्थात् पूजित उस चक्र में आठ दिग्भैरवों का और भूतों का पूजन पुष्पों से करे। हे कुलेश्वरि! तत्पश्चात् अरणि मन्थन से अथवा अपनी दीक्षा की परम्परा के अनुसार स्मार्त विधि से अग्नि को प्रज्वलित कर चक्र मध्य में स्थित बिन्दु में स्थापित करे। हे शिवे! उसमें अग्नि देवता का आवाहनादि पूर्वक पूजन पूर्वोक्त अग्नि के मूलमन्त्र से गन्धाक्षतपुष्पादि से करके वह्नि मुद्रा को दर्शाये। पूर्वोक्त अग्नि का मूलमन्त्र से 18 आहुति घी का देकर अग्नि को प्रदीप्त करे। पुनः मूलमन्त्र से ही 108 आहुति घी देकर अग्नि को समस्त संस्कारों से संस्कारित होने की भावाना करे। तदनन्तर

आगमिक पद्धति से अग्नि का अन्वाधान करे जो कि निम्न प्रकार से है। 1. वास्तोष्पते प्रतिजानीहि, 2. वास्तोष्पते शग्मया – इति द्वाभ्यां पक्वहविषा; 3. वास्तोष्पते ध्रुवास्थूणां, 4. वास्तोष्पते प्रतरणो, 5. अमीवहा – इति षड्भि:; 6. जातवेद – इत्यादि पंचभि:; 7. सद्योजात – इत्यादि पंचभि:; 8. शन्न इन्द्राग्नी – इत्यादि पंचदर्शाग्भि:; 9. भूरादि व्याहृतिभिश्च एकैकवारं घृतेन जुहुयात्, 10. शन्नो देवेति मन्त्रेण प्रतिद्रव्यं 108 आहुति देयं, तानि च द्रव्याणि – शमीसमिदाज्यं, चर्वाज्यं, पंचगव्याप्लुतदूर्वाज्यं च। शेषेण स्विष्टकृदादि प्रणीताविमोकान्तं कर्म कर्तव्यम्। वे मन्त्र इस प्रकार हैं –

1. **वास्तोष्पते प्रतिजानीह्यस्मान्त्स्वावेशो अनमीवो भवा नः। यत्त्वेमहे प्रति तन्नो जुषस्व शं नो भव द्विपदे शं चतुष्पदे।।1।।**

2. **वास्तोष्पते शग्मया संसदा ते सक्षीमहि रण्वया गातुमत्या। पाहि क्षेम उत योगे वरं नो यूयं पात स्वस्तिभिः सदा नः।।2।।**

–इति द्वाभ्यां पक्वहविषा। ततो केवलघृतेन–

3. **वास्तोष्पते ध्रुवा स्थूणाऽसत्रं सोम्यानाम्। द्रप्सो भेत्ता पुरां शश्वतीनामिन्द्रो मुनीनां सखा।।1।**

4. **वास्तोष्पते प्रतरणो न एधि गयस्फानो गोभिरश्वेभिरिन्दो। अजरासस्ते सख्ये स्याम पितेव पुत्रान् प्रति नो जुषस्व।।1।।**

5. **अमीवहा वास्तोष्पते विश्वां रूपाण्याविशन्। सख सुशेव एधि नः।।1।। यदर्जुन सारमेय दतः मिशंग यच्छसे। वीव भ्राजन्त ऋष्टय उप स्रक्वेषु बप्सतो नि षु स्वप।।2।। स्तेनं राय सारमेय तस्करं वा पुनः सर। स्तोतॄनिन्द्रस्य रायसि किमस्मानुदुच्छुनायसे नि षु स्वप।।3।। त्वं सूकरस्य दर्दृहि तव दर्दर्तु सूकरः। स्तोतॄनिन्द्रस्य रायसि किमस्मानुदुच्छुनायसे नि षु स्वप।।4।। सस्तु माता सस्तु पिता सस्तु श्वा सस्तु विश्पतिः। ससन्तु सर्वे ज्ञातयः सस्त्वयमभितो जनः।।5।। य आस्ते यश्च चरति यश्च पश्यति नो जनः। तेषां स हन्मो अक्षाणि यथेदं हर्म्यं तथा।।6।।**

6. **जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः। स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरिताऽत्यग्निः।।1।। तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम्। दुर्गां देवीं शरणमहं प्रपद्ये सुतरसि तरसे नमः।।2।। अग्ने त्वं पारया नव्यो अस्मान्**

स्वस्तिभिरति दुर्गाणि विश्वा। पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शंयोः।।3। विश्वानि नो दुर्गहा जातवेदस्सिन्धुं न नावा दुरिताऽतिपर्षि। अग्ने अत्रिवन्मनसा गृणानोऽस्माकं बोध्यविता तनूनाम्।।4।। पृतनाजितं सहमानमुग्रमग्निं हुवेम परमा सधस्थात्। स नः पर्षदति दुर्गाणि विश्वा क्षामद्देवो अतिदुरिताऽत्यग्निः।।5।।

7. सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः। भवे भवे नातिभवे भवस्व माम्। भवोद्भवाय नमः।।1।। वामदेवाय नमो ज्येष्ठाय नमश्श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः।।2।। अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः। सर्वेभ्यस्सर्व शर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः।।3।। तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयात्।।4।। ईशानस्सर्वविद्यानामीश्वरस्सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम्।।5।।

8. शं न इन्द्राग्नी भवतामवोभिः शं न इन्द्रावरुणा रातहव्या। शमिन्द्रासोमा सुविताय शंयोः शं न इन्द्रापूषणा वाजसातौ।।1।।
शं नो भगः शमु नः शंसो अस्तु शं नः पुरन्धिः शमु सन्तु रायः। शं नः सत्यस्य सुयमस्य शंसः शं नो अर्यमा पुरुजातो अस्तु।।2।।
शं नो धाता शमु धर्ता नो अस्तु शं न उरूची भवतु स्वधाभिः। शं रोदसी बृहती शं नो अद्रिः शं नो देवानां सुहवानि सन्तु।।3।।
शं नो अग्निर्ज्योतिरनीको अस्तु शं नो मित्रावरुणावश्विना शम्। शं नः सुकृतां सुकृतानि सन्तु शं न इषिरो अभि वातु वातः।।4।।
शं नो द्यावापृथिवी पूर्वहूतौ शमन्तरिक्षं दृशये नो अस्तु। शं न ओषधीर्वनिनो भवन्तु शं नो रजसस्पतिरस्तु जिष्णुः।।5।।
शं न इन्द्रो वसुभिर्देवो अस्तु शमादित्यभिर्वरुणः सुशंसः। शं नो रुद्रो रुद्रेभिर्जलाषः शं नस्त्वष्टा ग्राभिरिह शृणोतु।।6।।
शं नः सोमो भवतु ब्रह्म शं नः शं नो ग्रावाणः शमु सन्तु यज्ञाः। शं नः स्वरूपाणां मितयो भवन्तु शं नः प्रस्वः शम्वस्तु वेदिः।।7।।
शं नः सूर्य उरुचक्षा उदेतु शं नश्चतस्रः प्रदिशो भवन्तु। शं नः पर्वता ध्रुवयो भवन्तु शं नः सिन्धवः शमु सन्त्वापः।।8।।

